नुविधायी घटो मृत्कार्यो दृष्टः तथाच इमानि तस्मात्तथेति'।
तदन्वयव्यतिरेकानुविधायित्वं च 'षोडशकलः सोम्य
पुरुषः' इत्यादिना छान्दोग्यश्रुतौ मनसः श्रुतं तद्वदन्यत्रापि
द्रष्टव्यम् ॥ १७ ॥

**एकादशेन्द्रियैर्युक्त्या शास्त्रेणाप्यवगम्यते ।**
**यावत्किंचिद्भवेदेतदिदंशब्दोदितं जगत् ॥ १८ ॥**

एवं भूतानि भौतिकानि च विविच्य दर्शयित्वा प्रकृतां 'सदेव सोम्येदमग्र आसीत्' इत्यादि अद्वितीयब्रह्मप्रतिपादिकां श्रुतिं व्याचक्षाणस्तद्वाक्यस्थेदंपदस्यार्थमाह–**एकादशेति** । प्रत्यक्षादिभिः सर्वैः प्रमाणैरपि शब्दादर्थापत्त्यादिप्रमाणज्ञानैश्च यावत्किंचिज्जगदवगम्यते तत्सर्वं सदेवेत्यादिवाक्यस्थेन इदंपदेनाभिहितमित्यर्थः ॥ १८ ॥

**इदं सर्वं पुरा सृष्टेरेकमेवाद्वितीयकम् ।**
**सदेवासीन्नामरूपे नास्तामित्यारुणेर्वचः ॥ १९ ॥**

एवमिदंशब्दस्यार्थमभिधाय इदानीं तां श्रुतिं स्वयमेवार्थतः पठति—**इदमिति** । अरुणस्यापत्यमारुणिरुद्दालकः तस्य वचनमित्यर्थः ॥ १९ ॥

**वृक्षस्य स्वगतो भेदः पत्रपुष्पफलादिभिः ।**
**वृक्षान्तरात्सजातीयो विजातीयः शिलादितः २०**

एकमेवाद्वितीयमिति पदत्रयेण सद्वस्तुनि स्वगतादिभेद-

त्रयं प्रसक्तं निवारयितुं लोके स्वगतादिभेदत्रयं तावद्दर्शयति—**वृक्षस्येति** ॥ २० ॥

**तथा सद्वस्तुनो भेदत्रयं प्राप्तं निवार्यते ।**
**ऐक्यावधारणद्वैतप्रतिषेधैस्त्रिभिः क्रमात् ॥२१॥**

एवमनात्मनि भेदत्रयं प्रदर्श्य सद्वस्तुन्यपि प्रसक्तं तत् भेदत्रयं श्रुतिः पदत्रयेण निवारयतीत्याह—**तथेति** । वस्तुत्वसामान्यादनात्मनीव सद्रूपात्मवस्तुन्यपि प्रसक्तं स्वगतादिभेदत्रयं ऐक्यावधारणद्वैतप्रतिषेधाभिधायकैरेकमेवाद्वितीयमिति त्रिभिः पदैः क्रमेण निवार्यत इत्यर्थः ॥ २१ ॥

**सतो नावयवाः शङ्क्यास्तदंशस्यानिरूपणात् ।**
**नामरूपे न तस्यांशौ तयोरद्याप्यनुद्भवात् ॥ २२ ॥**

सद्वस्तुनस्तावन्न स्वगतभेदः शङ्कितुं शक्यते, अस्य निरवयवत्वादित्याह—**सत इति** । नामरूपयोः सदवयवत्वं किं न स्यादित्याशङ्क्य सृष्टेः पुरा तयोरभावान्न सदंशत्वमित्याह—**नामेति** ॥ २२ ॥

**नामरूपोद्भवस्यैव सृष्टित्वात्सृष्टितः पुरा ।**
**न तयोरुद्भवस्तस्मान्निरंशं सद्यथा वियत् ॥ २३ ॥**

कुतो नामरूपयोरभाव इत्याशङ्क्याह—**नामरूपेति** । फलितमाह—**तस्मादिति** । अत्रायं प्रयोगः—सद्वस्तु स्वगतभेदशून्यं भवितुमर्हति निरवयवत्वाद्गगनवदिति ॥२३॥

**सदन्तरं सजातीयं न वैलक्षण्यवर्जनात्।**
**नापरूपोपाधिभेदं विना नैव सतो भिदा॥ २४॥**

मा भूत्स्वगतभेदः सजातीयभेदः किं न स्यादित्याशङ्क्य तत्सजातीयं सदन्तरमिति वक्तव्यं न तन्निरूपयितुं शक्यते सतो वैलक्षण्याभावादित्याह—**सदन्तरमिति**। ननु घटसत्ता पटसत्तेति सतो भेदः प्रतिभासते इत्याशङ्क्य घटाकाशमठाकाशवदौपाधिको भेदो न स्वतो भातीत्याह—**नामरूपोपाधिभेदमिति**। अत्रायं प्रयोगः—सद्वस्तु सजातीयभेदरहितं भवितुमर्हति उपाधिपरामर्शमन्तरेणाविभाव्यमानभेदत्वाद्गगनवदिति॥ २४॥

**विजातीयमसत्तत्तु न खल्वस्तीति गम्यते।**
**नास्यातः प्रतियोगित्वं विजातीयाद्भिदा कुतः २५**

भवतु तर्हि विजातीयाद्भेद इत्याशङ्क्य सतो विजातीयमसत्तस्यासत्त्वेनैव प्रतियोगित्वासंभवेन तत्प्रतियोगिकोऽपि भेदो नास्तीत्याह—**विजातीयमिति**॥ २५॥

**एकमेवाद्वितीयं सत्सिद्धमत्र तु केचन।**
**विह्वला असदेवेदं पुरासीदित्यवर्णयन्॥ २६॥**

फलितमाह—**एकमेवेति**। इदानीं स्थूणानिखननन्यायेन सदद्वैतमेव द्रढयितुं पूर्वपक्षमाह—**अत्र त्विति**॥२६॥

**मग्नस्याब्धौ यथाक्षाणि विह्वलानि तथास्य धीः ।**
**अखण्डैकरसं श्रुत्वा निःप्रचारा बिभेत्यतः ॥२७॥**

विह्वलत्वे दृष्टान्तमाह—**मग्नस्येति** । दार्ष्टान्तिके योजयति—**तथेति** । अस्यासद्वादिनः । जातावेकवचनम् । धीरन्तःकरणमखण्डैकरसं वस्तु श्रुत्वा निःप्रचारा साकारवस्तुनीवाखण्डैकरसे वस्तुनि प्रचाररहिता सती अतोऽस्माद्वस्तुनो बिभेति ॥ २७ ॥

**गौडाचार्या निर्विकल्पे समाधावन्ययोगिनाम् ।**
**साकारब्रह्मनिष्ठानामत्यन्तं भयमूचिरे ॥ २८ ॥**

उक्तार्थे आचार्यसंमतिं दर्शयति—**गौडाचार्या इति** ॥ २८ ॥

**अस्पर्शयोगो नामैष दुर्दर्शः सर्वयोगिभिः ।**
**योगिनो बिभ्यति ह्यस्मादभये भयदर्शिनः ॥२९॥**

केन वाक्येनोक्तवन्त इत्याकाङ्क्षायां तदीयं वार्तिकमेव पठति—**अस्पर्शेति** । योऽयमस्पर्शयोगाख्यो निर्विकल्पः समाधिः एष सर्वयोगिभिः साकारध्याननिष्ठैर्दुर्दर्शः दुःखेन द्रष्टुं योग्यः दुष्प्राप इत्यर्थः । तत्रोपपत्तिमाह—**योगिन इति** । हि यस्मात्कारणाद्योगिनः पूर्वोक्तद्वैतदर्शिनः अभये भयशून्ये समाधौ निर्जने देशे बाला इव भयदर्शिनो भयहेतुत्वं कल्पयन्तः अस्मादस्पर्शयोगाद्भीतिं प्राप्नुवन्ति ॥२९॥

भगवत्पूज्यपादाश्च शुष्कतर्कपटूनमून् ।
आहुर्माध्यमिकान्भ्रान्तानचिन्त्येऽस्मिन्सदात्मनि
श्रीमदाचार्यैरप्येतदभिहितमित्याह—भगवदिति ३०

अनादृत्य श्रुतिं मौर्ख्यादिमे बौद्धास्तमस्विनः ।
आपेदिरे निरात्मत्वमनुमानैकचक्षुषः ॥ ३१ ॥
तद्वार्तिकं पठति—अनादृत्येति ॥ ३१ ॥

शून्यमासीदिति ब्रूषे सद्योगं वा सदात्मताम् ।
शून्यस्य न तु तद्युक्तमुभयं व्याहतत्वतः ॥ ३२ ॥
इदानीमसद्वादं विकल्प्य दूषयति—शून्यमिति । शून्यमासीदित्यनेन वाक्येन शून्यस्य सत्ताजातीययोगं वा सद्रूपतां वा ब्रूषे इति विकल्पार्थः । तदुभयं सत्तासंबन्धसद्रूपत्वलक्षणं शून्यस्य व्याहतत्वान्न युज्यत इत्यर्थः ॥ ३२ ॥

न युक्तस्तमसा सूर्यो नापि चासौ तमोमयः ।
सच्छून्ययोर्विरोधित्वाच्छून्यमासीत्कथं वद ३३
व्याहतत्वमेव दृष्टान्तपूर्वकं द्रढयति–न युक्त इति ३३

वियदादेर्नामरूपे मायया सुविकल्पिते ।
शून्यस्य नामरूपे च तथा चेज्जीव्यतां चिरम् ३४
ननु भवन्मते वियदादीनां निर्विकल्पे ब्रह्मणि सत्त्वं व्याहतमित्याशङ्क्याह—वियदादेरिति । तर्हि शून्यस्यापि नामरूपे सद्वस्तुनि कल्पिते इति वदतो बौद्धस्यापसिद्धान्त इत्यभिप्रायेणाह—शून्यस्येति ॥ ३४ ॥

**सतोऽपि नामरूपे द्वे कल्पिते चेत्तदा वद ।**
**कुत्रेति निरधिष्ठानो न भ्रमः क्वचिदीक्ष्यते ॥३५॥**

ननु तर्हि शून्यस्येव सद्वस्तुनोऽपि नामरूपे कल्पिते एवाङ्गीकर्तव्ये भवन्मते वास्तवयोर्नामरूपयोरभावादिति शङ्कते—**सतोऽपीति**। विकल्पासहत्वादयं पक्ष एवानुपपन्न इत्यभिप्रायेण परिहरति—**तदेति**। अयमभिप्रायः—सतो नामरूपे किं सति कल्पिते, उतासति, अथवा जगति। नाद्यः। अन्यस्य रजतादेर्नामरूपयोः अन्यत्र शुक्तिकादावारोपदर्शनात्, सतो नामरूपयोः सत्येव कल्पनायोगात्। न द्वितीयः। असतो निरात्मकस्य चाधिष्ठानत्वायोगात्। न तृतीयः। सत उत्पन्नस्य जगतः सन्नामरूपकल्पनाधिष्ठानत्वानुपपत्तेरिति । मा भूदधिष्ठानं, अनयोः कल्पना किं न स्यादित्याशङ्क्याह—**निरधिष्ठान इति** ॥ ३५ ॥

**सदासीदिति शब्दार्थभेदे वैगुण्यमापतेत् ।**
**अभेदे पुनरुक्तिः स्यान्मैवं लोके तथेक्षणात् ॥३६॥**

ननु 'असदेवेदमग्र आसीदि' त्यत्र यथा व्याघात उक्तः तथा 'सदेव सोम्येदमग्र आसीत्' इत्यत्रापि दोषोऽस्तीति शङ्कते—**सदासीदितीति**। तथाहि । सदासीदिति शब्दभेदयोरर्थभेदोऽस्ति न वा। अस्ति चेदद्वैतहानिः, नास्ति चेत्पुनरुक्तिः स्यात्। अतः सदासीदित्यनुपपन्नमिति द्वितीयं पक्ष-

मादाय परिहरति—मैवमिति । पुनरुक्तिदोषस्य कः परिहार इत्याशङ्क्याह—लोक इति ॥ ३६ ॥

**कर्तव्यं कुरुते वाक्यं ब्रूते धार्यस्य धारणम् ।**
**इत्यादिवासनाविष्टं प्रत्यासीत्सदितीरणम् ॥३७॥**

लोके एवंविधेषु प्रयोगेषु पुनरुक्त्यभावः कुत्र दृष्ट इत्याशङ्क्याह—कर्तव्यमिति । भवत्वेवं लोके श्रुतौ किमायातमित्यत आह—इत्यादीति ॥ ३७ ॥

**कालाभावे पुरेत्युक्तिः कालवासनया युतम् ।**
**शिष्यं प्रत्येव तेनात्र द्वितीयं न हि शङ्क्यते ॥३८॥**

नन्वद्वितीये वस्तुनि भूतकालाभावात् अग्र आसीदित्युक्तिरनुपपन्नेत्याशङ्क्याह—कालेति । ननु जगदुत्पत्तेः पुराकालसद्भावेन सद्वितीयत्वं ब्रह्मण इत्याशङ्क्य श्रुतिप्रवृत्तेः द्वैतवासनाविष्टश्रोतृप्रतिबोधनार्थत्वात् नातिशङ्कनीयमित्याह—तेनेति ॥ ३८ ॥

**चोद्यं वा परिहारो वा क्रियतां द्वैतभाषया ॥**
**अद्वैतभाषया चोद्यं नास्ति नापि तदुत्तरम् ॥३९॥**

इदानीं सिद्धान्तरहस्यमाह—चोद्यमिति । व्यवहारदशयां चोद्यादि कर्तव्यं, परमार्थतस्तु अद्वैतमेव तत्त्वमित्यर्थः ॥ ३९ ॥

**तदा स्तिमितगम्भीरं न तेजो न तमस्ततम्।**
**अनाख्यमनभिव्यक्तं सत्किंचिदवशिष्यते ॥ ४० ॥**

परमार्थतो द्वैताभावे स्मृतिं प्रमाणयति—**तदेति**। स्तिमितं निश्चलं, गम्भीरं दुरवगाहं मनसा विषयीकर्तुमशक्यं, न तेजः तेजस्त्वानधिकरणं, न तमः तमसो विलक्षणं अनावरणस्वभावं, ततं व्याप्तम्, अनाख्यं व्याख्यातुमशक्यम्, अनभिव्यक्तं चक्षुरादिभिरप्यविषयीकृतं सत् शून्यविलक्षणं अतएव किंचिदिदन्तया निर्देष्टुमशक्यमवशिष्यते। द्वैतनिषेधावधित्वेनावतिष्ठत इत्यर्थः ॥ ४० ॥

**ननु भूम्यादिकं माभूत्परमाण्वन्तनाशतः।**
**कथं ते वियतोऽसत्वं बुद्धिमारोहतीति चेत् ॥४१॥**

ननु जनिमत्त्वेन अनित्यस्य भूम्यादेरसत्त्वमस्तु नित्याकाशस्य असत्त्वं कथमङ्गीक्रियत इति शङ्कते-**नन्विति** ४१

**अत्यन्तं निर्जगद्व्योम यथा ते बुद्धिमाश्रितम्।**
**तदैव सन्निराकाशं कुतो नाश्रयते मतिम् ॥ ४२ ॥**

दृष्टान्तावष्टम्भेन परिहरति—**अत्यन्तमिति**। अत्यन्तं निर्जगत्। जगन्मात्ररहितमित्यर्थः ॥ ४२ ॥

**निर्जगद्व्योम दृष्टं चेत्प्रकाशतमसी विना।**
**क्व दृष्टं किं च ते पक्षे न प्रत्यक्षं वियत्खलु ॥४३॥**

'न हि दृष्टेऽनुपपन्नम्' इति न्यायमाश्रित्य चोदयति—

निर्जगदिति । दर्शनमेवासिद्धमिति परिहरति—प्रकाशेति । अपसिद्धान्तोऽपीत्याह—किंचेति ॥ ४३ ॥

**सद्वस्तु शुद्धं त्वस्माभिर्निश्चितैरनुभूयते ।**
**तूष्णींस्थितौ न शून्यत्वं शून्यबुद्धेश्च वर्जनात् ४४**

ननु दर्शनाभावः सद्वस्तुन्यपि समान इत्याशङ्क्य सतः सर्वानुभवसिद्धत्वान्मैवमित्याह—**सद्वस्त्विति** । ननु तूष्णींभावे शून्यमेव इतरस्य कस्यापि प्रतीत्यभावादित्याशङ्क्य शून्यस्यापि शून्यप्रतीत्यभावाच्छून्यमपि न संभवतीत्याह—**न शून्यत्वमिति** ॥ ४४ ॥

**सद्बुद्धिरपि चेन्नास्ति मास्त्वस्य स्वप्रभत्वतः ।**
**निर्मनस्कत्वसाक्षित्वात्सन्मात्रं सुगमं नृणाम् ४५**

ननु तर्हि सद्बुद्ध्यभावात्सत्वमपि न घटत इति शङ्कते—**सद्बुद्धिरिति** । तस्य स्वप्रकाशत्वान्न तद्बुद्ध्यभावोऽनिष्ट इति परिहरति—**मास्त्वस्येति** । स्वगोचरबुद्ध्यभावे कथं सद्वस्त्ववगन्तुं शक्यत इत्यत आह—**निर्मनस्कत्वेति** ॥४५॥

**मनोजृम्भणराहित्ये यथा साक्षी निराकुलः ।**
**मायाजृम्भणतः पूर्वं सत्तथैव निराकुलम् ॥ ४६ ॥**

एवं निष्प्रपञ्चस्य साक्षिणस्तूष्णींस्थितौ भानं प्रदर्श्यैतद्दृष्टान्तबलेन सृष्टेः पुरापि तद्वस्तु तथावगन्तुं शक्यत इत्याह—**मन इति** ॥ ४६ ॥

**निस्तत्त्वा कार्यगम्यास्य शक्तिर्मायाग्निशक्तिवत् ।**
**नहि शक्तिः कचित्कैश्चिद्बुध्यते कार्यतः पुरा ॥४७॥**

मायायाः किं लक्षणमित्यत आह—**निस्तत्त्वेति** । निस्तत्त्वा जगत्कारणभूताद्वस्तुनः पृथक्तत्त्वरहिता, कार्यगम्या वियदादिकार्यलिङ्गगम्या अस्य सद्वस्तुनः शक्तिः वियदादिकार्यजननसामर्थ्यं मायेत्युच्यते । वस्तुस्वरूपातिरिक्तशक्तिसद्भावे दृष्टान्तमाह—**अग्नीति** । यथाग्न्यादिस्वरूपातिरिक्तं स्फोटादिकार्यलिङ्गगम्यं वह्न्यादिनिष्ठं सामर्थ्यमस्ति तद्वदित्यर्थः । शक्तेः कार्यलिङ्गगम्यत्वं व्यतिरेकमुखेन द्रढयति—**नहि शक्तिरिति** ॥ ४७ ॥

**न सद्वस्तु सतः शक्तिर्न हि वह्नेः स्वशक्तिता ।**
**सद्विलक्षणतायां तु शक्तेः किं तत्त्वमुच्यताम्॥४८॥**

एवं शक्तेः कार्यलिङ्गगम्यत्वमुपपाद्य निस्तत्त्वरूपतामुपपादयति—**न सद्वस्त्विवति** । अयमभिप्रायः—सद्वस्तुनः शक्तिः किं सती उतासती । न तावत्सती । तथात्वे सतोऽभिन्नत्वेन तच्छक्तित्वायोगात् । उक्तार्थे दृष्टान्तमाह—**न हि वह्नेरिति** । द्वितीयेऽपि किं नरविषाणतुल्या उत सद्विलक्षणेति विकल्पाभिप्रायेण पृच्छति—**सद्विलक्षणतायामिति** ॥ ४८ ॥

**शून्यत्वमिति चेच्छून्यं मायाकार्यमितीरितम् ।**
**न शून्यं नापि सद्यादृक्तादृक्तत्वमिहेष्यताम् ४९**

तत्राद्यं पक्षमनूद्य दूषयति—**शून्यत्वमिति**। 'शून्यस्य नामरूपे च तथा चेज्जीव्यतां चिरम्' इत्यत्रेत्यर्थः। तस्माद्द्वितीयः पक्षः परिशिष्यत इत्याह—**न शून्यमिति**। मायास्वरूपं सत्त्वासत्त्वाभ्यां निर्वचनानर्हमित्यभिप्रायः॥४९॥

**नाऽसदासीन्नो सदासीत्तदानीं किं त्वभूत्तमः।**
**सद्योगात्तमसः सत्त्वं न स्वतस्तन्निषेधनात्॥५०॥**

अस्मिन्नर्थे श्रुतिं प्रमाणयति—**नासदिति**। 'तम आसीत्तमसा गूढमग्रे' इत्यादिश्रुतिः प्रमाणमित्यर्थः। तर्हि तम आसीदिति कथं सत्त्वमुच्यत इत्यत आह—**सद्योगादिति**। कुत इत्यत-**तन्निषेधनादिति** ॥ ५० ॥

**अत एव द्वितीयत्वं शून्यवन्न हि गण्यते।**
**न लोके चैत्रतच्छत्त्योर्जीवितं लिख्यते पृथक् ५१**

फलितमाह—**अत एवेति**। यतः स्वतः सत्त्वं मायाया नास्ति अतः शून्यस्येव मायाया अपि द्वितीयत्वं न गण्यते हि। नैवाद्रियत इत्यर्थः। अनृतस्य द्वितीयत्वानङ्गीकारे दृष्टान्तमाह—**न लोक इति** ॥ ५१ ॥

**शक्त्याधिक्ये जीवितं चेद्वर्धते तत्र वृद्धिकृत्।**
**न शक्तिः किंतु तत्कार्यं युद्धकृष्यादिकं तथा॥५२॥**

ननु शक्त्याधिक्ये जीविताधिक्यं दृश्यते, अतः शक्तेरपि पृथक् जीवितत्वमस्तीति शङ्कते—**शक्त्याधिक्य**

इति । न शक्तिर्जीवितवर्धने कारणमपि तु तत्कार्यं युद्धकृष्यादीति परिहरति—तत्रेति । दार्ष्टान्तिके योजयति–तथेति ॥ ५२ ॥

**सर्वथा शक्तिमात्रस्य न पृथग्गणना क्वचित् ।**
**शक्तिकार्यं तु नैवास्ति द्वितीयं शङ्क्यते कथम् ५३**

**सर्वथेति** । माभूच्छक्त्या सद्वितीयत्वं सतोऽपि तु तत्कार्येण तद्भवत्येवेत्याशङ्क्य तस्य तदानीमसत्त्वात्तेनापि न सद्वितीयत्वमित्याह—**शक्तिकार्यं त्विति** ॥ ५३ ॥

**न कृत्स्नब्रह्मवृत्तिः सा शक्तिः किंत्वेकदेशभाक् ।**
**घटशक्तिर्यथा भूमौ स्निग्धमृद्येव वर्तते ॥ ५४ ॥**

ननु सच्छक्तिः सति सर्वत्र वर्तते उतैकदेशे । नाद्यः । मुक्तेः प्राप्यब्रह्माभावप्रसङ्गात् । न द्वितीयः । निरंशत्वेन विरोधित्वादित्याशङ्क्याद्यानङ्गीकारात् द्वितीये परिहारो वक्ष्यत इत्यभिप्रायेणाह—**न कृत्स्नेति** । एकदेशवृत्तौ दृष्टान्तमाह—**घटेति** ॥ ५४ ॥

**पादोऽस्य सर्वा भूतानि त्रिपादस्ति स्वयंप्रभः ।**
**इत्येकदेशवृत्तित्वं मायाया वदति श्रुतिः ॥ ५५ ॥**

शक्तेरेकदेशवृत्तित्वे प्रमाणमाह–**पादोऽस्येति** ॥५५॥

**विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् ।**
**इति कृष्णोऽर्जुनायाह जगतस्त्वेकदेशताम् ॥५६॥**

न केवलं श्रुतिरेव स्मृतिरप्यस्तीत्याह—**विष्टभ्येति** ॥५६॥

**स भूमिं विश्वतो वृत्वा ह्यत्यतिष्ठद्दशाङ्गुलम् ।**
**विकारावर्ति चात्रास्ति श्रुतिसूत्रकृतोर्वचः ॥ ५७ ॥**

इदानीं निर्मायस्वरूपसद्भावे प्रमाणमाह—**स भूमि-मिति** । 'विकारावर्ति च तथाहि स्थितिमाह' इति सूत्र-कारवचनमित्यर्थः ॥ ५७ ॥

**निरंशेऽप्यंशमारोप्य कृत्स्नेंऽशे वेति पृच्छतः ।**
**तद्भाषयोत्तरं ब्रूते श्रुतिः श्रोतृहितैषिणी ॥ ५८ ॥**

तर्हि निरंशत्वे विरोध इत्यस्य कः परिहार इत्याशङ्क्य वास्तवनिरंशत्वाभ्युपगमान्न विरोध इत्यभिप्रायेणोदाहृतश्रु-त्यभिप्रायमाह—**निरंशेऽपीति** ॥ ५८ ॥

**सत्तत्त्वमाश्रिता शक्तिः कल्पयेत्सति विक्रियाः ।**
**वर्णा भित्तिगता भित्तौ चित्रं नानाविधं तथा५९**

यदर्थं ब्रह्मणि माया समर्थिता तदिदानीमाह—**सत्त-त्त्वमिति** । विक्रियाः विविधत्वेन क्रियन्ते इति विक्रियाः कार्यविशेषा इत्यर्थः । तत्र दृष्टान्तमाह—**वर्णा इति** । वर्णा रक्तपीतादयो धातुविशेषाः ॥ ५९ ॥

**आद्यो विकार आकाशः सोऽवकाशस्वरूपवान् ।**
**आकाशोऽस्तीति सत्तत्त्वमाकाशेऽप्यनुगच्छति॥**

तत्र प्रथमं कार्यविशेषं दर्शयति—**आद्य इति** ।

तत्स्वरूपमाह—सोऽवकाश इति । आकाशस्य ब्रह्मकार्यत्वे हेतुमाह—आकाश इति ॥ ६० ॥

**एकस्वभावं सत्तत्त्वमाकाशो द्विस्वभावकः ।**
**नावकाशः सति व्योम्नि स चैषोपि द्वयं स्थितम् ॥**

ततः किमित्यत आह—एकेति । उक्तमर्थं विशदयति—नावकाश इति । सति सद्वस्तुन्यवकाशो नास्ति किंतु सत्स्वभाव एक एव । आकाशे तु स च सत्स्वभावश्च एषोऽप्यवकाशस्वभावोऽपीति द्वयं स्थितं वियत इत्यर्थः ६१

**यद्वा प्रतिध्वनिर्व्योम्नो गुणो नासौ सतीक्ष्यते ।**
**व्योम्नि द्वौ सद्ध्वनी तेन सदेकं द्विगुणं वियत् ६२**

सदाकाशयोरेकद्विस्वभावत्वं प्रकारान्तरेण व्युत्पादयति—यद्वेति । प्रतिध्वनिर्व्योम्नो गुण इत्युपपादितमधस्तात् । असौ प्रतिध्वनिः तद्वस्तुनि नेक्ष्यते नोपलभ्यते । व्योम्नि तु सद्ध्वनी सच्छब्दौ उभावप्युपलभ्येते तेन कारणेन सत् एकस्वभावम्, वियत् द्विगुणम् । द्विस्वभावकमित्यर्थः ॥ ६२ ॥

**या शक्तिः कल्पयेद्व्योम सा सद्व्योम्नोरभिन्नताम् ।**
**आपद्य धर्मधर्मित्वं व्यत्ययेनावकल्पयेत् ॥ ६३ ॥**

नन्वाकाशस्य सद्ब्रह्मकार्यत्वे आकाशस्य सत्तेति सत आकाशधर्मता कुतः प्रतिभातीत्याशङ्क्याह—या शक्ति-

रिति। या माया सद्वस्तुनि आकाशं कल्पयति सा प्रथमतः सद्व्योम्नोरभेदं कल्पयित्वा पश्चात्तद्धर्मधर्मिभावं वैपरीत्येन कल्पयति। अत आकाशस्य सत्तेति भानमुपपद्यत इत्यर्थः ॥ ६३ ॥

**सतो व्योमत्वमापन्नं व्योम्नः सत्तां तु लौकिकाः।**
**तार्किकाश्चावगच्छन्ति मायाया उचितं हि तत् ॥**

मायया वैपरीत्यं कथं कृतमित्याशङ्क्याह—**सत इति।** वस्तुतत्त्वविचारे क्रियमाणे मृदो घटरूपत्वमिव सतो व्योमत्वमापन्नं तद्वस्तुन आकाशरूपत्वं प्राप्तं लौकिकाः प्राणिनः शास्त्रेषु मध्ये तार्किकाश्च तद्वैपरीत्येन व्योम्नो गगनस्य धर्मिणः सत्तां सद्रूपधर्मजातिं चावगच्छन्ति जानन्ति ॥ ननु अन्यस्यान्यथाप्रतीतिरनुपपन्ना इत्याशङ्क्याह—**मायाया इति।** तद्विपरीतदर्शनहेतुत्वं मायाया युक्तमित्यर्थः ॥ ६४ ॥

**यद्यथा वर्तते तस्य तथात्वं भाति मानतः।**
**अन्यथात्वं भ्रमेणेति न्यायोऽयं सार्वलौकिकः ६५**

मायाया विपरीतप्रतीतिहेतुत्वं लौकिकन्यायप्रदर्शनेन स्पष्टीकरोति—**यद्यथेति।** यत् शुक्त्यादि यथा येन शुक्तिकादिरूपेण वर्तते तस्य तथात्वं शुक्त्यादिरूपत्वं प्रमाणतः स्फुरति। अन्यथात्वं रजतादिरूपत्वं तद्भ्रमेण भ्रान्त्या प्रतिभातीत्ययं न्यायः सर्वलोकप्रसिद्ध इत्यर्थः ॥ ६५ ॥

**एवं श्रुतिविचारात्प्राग्यथा यद्वस्तु भासते ।**
**विचारेण विपर्येति ततस्तच्चिन्त्यतां वियत् ॥६६॥**

एवं भ्रान्त्या विपरीतप्रतिभानं दर्शयित्वा तन्निवृत्त्युपायमाह—**एवमिति** । एवमुक्तेन प्रकारेण श्रुतिविचारात्प्राक् श्रुत्यर्थविचारात्पूर्वं यद्वस्तु यत्सद्रूपं ब्रह्म भ्रान्त्या यथा येन गगनादिरूपेण वर्तते तच्छ्रुत्यर्थपर्यालोचनेन विपर्येति गगनादिभावं परित्यज्य सद्रूपं ब्रह्मैव भवति । ततः श्रुतिविचारेण वस्तुयाथात्म्यदर्शनसंभवात्तद्वियच्चिन्त्यताम् । विचार्यतामित्यर्थः ॥ ६६ ॥

**भिन्ने वियत्सती शब्दभेदाद्बुद्धेश्च भेदतः ।**
**वाय्वादिष्वनुवृत्तं सन्नतु व्योमेति भेदधीः॥६७॥**

विचारस्वरूपमेव दर्शयति—**भिन्न इति** । भिन्ने इति प्रतिज्ञार्थे हेतुमाह—**शब्देति** । वियत्सच्छब्दयोरपर्यायत्वादित्यर्थः । हेत्वन्तरमाह—**बुद्धेश्चेति** । तमेव हेतुं विशदयति—**वाय्वादिष्विति** । यद्वाय्वादिषु भूतेषु सन्वायुः सत्तेज इत्येवंप्रकारेणानुवृत्तं भासते, व्योम तु नैवं भासते इति यज्ज्ञानं सा भेदधीः । भेदबुद्धिरित्यर्थः ॥६७॥

**सद्वस्त्वधिकवृत्तित्वाद्धर्मि व्योम्नस्तु धर्मता ।**
**धिया सतः पृथक्कारे ब्रूहि व्योम किमात्मकम् ६८**

एवं सदाकाशयोर्भेदं प्रसाध्य व्योम्नः सत्तेति भ्रान्त्या

प्रतीतस्य धर्मिधर्मभावस्य विचारेण व्यत्ययं दर्शयति—**सद्वस्त्विति**। रूपरसादिष्वनुवृत्तस्य द्रव्यस्येव आकाशवाय्वादिष्वनुवृत्तस्य सतो धर्मित्वं रसादिभ्यो व्यावृत्तस्य रूपस्येव वाय्वादिभ्यो व्यावृत्तस्य नभसो धर्मत्वमित्यर्थः। ननु तर्हि घटाद्भिन्नरूपस्य यथा वास्तवत्वं तथा सतो भिन्नस्य नभसोऽपि स्यादित्याशङ्क्य सद्व्यतिरिक्तस्य नभसो दुर्निरूपत्वान्नैवमित्याह—**धियेति** ॥ ६८ ॥

**अवकाशात्मकं तच्चेदसत्तदिति चिन्त्यताम्।**
**भिन्नं सतोऽसच्च नेति वक्षि चेद्व्याहतिस्तव ॥६९॥**

दुर्निरूपत्वमसिद्धमिति शङ्कते—**अवकाशात्मकमिति**। तर्हि सतो विलक्षणत्वादसदेव स्यादिति परिहरति—**असदिति**। सतो विलक्षणस्यासत्त्वं नास्तीति वदतो दोषमाह—**भिन्नमिति** ॥ ६९ ॥

**भातीति चेद्भातु नाम भूषणं मायिकस्य तत्।**
**यदसद्भासमानं तन्मिथ्यास्वप्नगजादिवत् ॥७०॥**

असत्त्वे भानं न स्यादित्याशङ्क्य तुच्छविलक्षणत्वाद्भानं न विरुध्यत इत्याह—**भातीति चेदिति**। अविरोधं दर्शयितुं मिथ्यावस्तुनो लक्षणं सदृष्टान्तमाह—**यदसदिति**। यद्वस्तु स्वरूपेणाविद्यमानमपि भासते तत्स्वप्नगजादिवन्मिथ्येत्यर्थः ॥ ७० ॥

**जातिव्यक्ती देहिदेहौ गुणद्रव्ये यथा पृथक् ।**
**वियत्सतोस्तथैवास्तु पार्थक्यं कोऽत्र विस्मयः ७१**

ननु नियमेन सहोपलभ्यमानयोर्भेदो न दृष्टचर इत्याशङ्क्याह—**जातीति** ॥ ७१ ॥

**बुद्धोऽपि भेदो नो चित्ते निरूढिं याति चेत्तदा ।**
**अनैकाग्र्यात्संशयाद्वा रूढ्यभावोऽस्य ते वद ७२**

भेदो यद्यपि बुध्यते तथापि निश्चितो न भवतीति शङ्कते—**बुद्धोऽपीति** । तस्य परिहारं वक्तुं निश्चयाभावे कारणं पृच्छति—**अनैकाग्र्यादिति** ॥ ७२ ॥

**अप्रमत्तो भव ध्यानादाद्येऽन्यस्मिन्विवेचनम् ।**
**कुरु प्रमाणयुक्तिभ्यां ततो रूढतमो भवेत् ॥७३॥**

आद्ये परिहारमाह—**अप्रमत्त इति** । आद्ये प्रथमे विकल्पे ध्यानात् 'तत्र प्रत्ययैकतानता ध्यानम्' इत्युक्तलक्षणादप्रमत्तो भव । सावधानमना भवेति यावत् । द्वितीये परिहारमाह—**अन्यस्मिन्निति** । ततः किमित्यत आह—**तत इति** ॥ ७३ ॥

**ध्यानान्मानाद्युक्तितोऽपि रूढे भेदे वियत्सतोः ।**
**न कदाचिद्वियत्सत्यं सद्वस्तु च्छिद्रवन्न च ॥७४॥**

ततोऽपि किमित्यत आह—**ध्यानादिति** । ध्यानं पूर्वोक्तलक्षणम्, मानं 'भिन्ने वियत्सती शब्दभेदाद्बुद्धेश्च

भेदतः' इत्यत्रोक्तम् । युक्तिस्तु 'सदस्त्वधिकवृत्तित्वात्' इत्यादावुक्ता । एतैः ध्यानादिभिः वियत्सतोर्भेदे चित्ते निरूढे जाते सति वियत्कदाचिन्न सत्यं किंतु सर्वदा मिथ्यैवावभासते, सद्वस्त्वपि छिद्रवदवकाशवन्न च नैव भवतीति शेषः ॥७४॥

**ज्ञस्य भाति सदा व्योम निस्तत्त्वोल्लेखपूर्वकम् ।**
**सद्वस्त्वपि विभात्यस्य निश्छिद्रत्वपुरःसरम् ७५**

वियत्सत्त्वविवेचने फलमाह—**ज्ञस्येति** ॥ ७५ ॥

**वासनायां प्रवृद्धायां वियत्सत्यत्ववादिनम् ।**
**सन्मात्राबोधयुक्तं च दृष्ट्वा विस्मयते बुधः ॥७६॥**

वियन्मिथ्यात्वं सतो वस्तुत्वं च सदा चिन्तयतः किं भवतीत्यत आह—**वासनायामिति** । बुधो वियत्सतोस्तत्त्ववेत्ता गगनस्य सत्यत्वं ब्रुवाणं निरवकाशसद्वस्त्ववबोधरहितं च दृष्ट्वा विस्मयं प्राप्नोतीत्यर्थः ॥ ७६ ॥

**एवमाकाशमिथ्यात्वे सत्सत्यत्वे च वासिते ।**
**न्यायेनानेन वाय्वादेः सद्वस्तु प्रविविच्यताम् ७७**

उक्तन्यायमन्यत्राप्यतिदिशति—**एवमिति** ॥ ७७ ॥

**सद्वस्तुन्येकदेशस्था माया तत्रैकदेशगम् ।**
**वियत्तत्राप्येकदेशगतो वायुः प्रकल्पितः ॥ ७८ ॥**

नन्वाकाशकार्यस्य वायोरकारणभूतेन सद्वस्तुना तादात्म्यप्रतीत्ययोगात्सतो विवेचनमप्रयोजकमित्याशङ्क्य साक्षा-

त्संबन्धाभावेऽपि परम्परया संबन्धोऽस्तीत्याह—**सद्वस्तु-नीति** ॥ ७८ ॥

**शोषस्पर्शौ गतिर्वेगो वायुधर्मा इमे मताः ।**
**त्रयः स्वभावाः सन्मायाव्योम्नां ये तेऽपि वायुगाः ॥**

एवं सद्वाय्वोः संबन्धं प्रदर्श्य तयोर्धर्मतो भेदज्ञानाय वायौ प्रतीयमानान्धर्मानाह—**शोषस्पर्शाविति** । एवं प्रातिस्विकान्धर्मानभिधाय कारणतः प्राप्तांस्तानाह—**त्रय इति** । सन्मायाव्योम्नां ये त्रयः स्वभावाः शीलविशेषा धर्मास्तेऽपि वायुगाः । वायौ विद्यन्ते इत्यर्थः ॥ ७९ ॥

**वायुरस्तीति सद्भावः सतो वायौ पृथक्कृते ।**
**निस्तत्त्वरूपतामायास्वभावो व्योमगो ध्वनिः॥८०॥**

के ते धर्मा इत्यत आह—**वायुरिति** । वायुरस्तीति व्यवहारहेतुसद्रूपत्वं सद्वस्तुनो धर्म एकः । वायौ सद्वस्तुनो विवेचिते सति यन्निस्तत्त्वरूपत्वं स मायाधर्मो द्वितीयः । शब्दो व्योम्नः सकाशादागतो धर्मस्तृतीय इत्यर्थः ॥ ८० ॥

**सतोऽनुवृत्तिः सर्वत्र व्योम्नो नेति पुरेरितम् ।**
**व्योमानुवृत्तिरधुना कथं न व्याहतं वचः ॥ ८१ ॥**

ननु व्योमविवेचनप्रस्तावे 'वाय्वादिष्वनुवृत्तं सत् न तु व्योमेति भेदधी'रित्यत्र वाय्वादावाकाशानुवृत्तिः निवारिता । इदानीं व्योमानुवृत्तिरभिधीयते । अतः पूर्वोत्तरविरोध इति

शङ्कते—सत इति । व्योमानुवृत्तिरधुनोच्यत इति शेषः ॥ ८१ ॥

**छिद्रानुवृत्तिर्नेतीति पूर्वोक्तिरधुना त्वियम् ।**
**शब्दानुवृत्तिरेवोक्ता वचसो व्याहतिः कुतः ॥८२॥**

पूर्वमवकाशलक्षणस्वरूपानुवृत्तिः निवारिता, इदानीं धर्मानुवृत्तिरेवाभिधीयते न स्वरूपानुवृत्तिः, अतो न व्याहतिरिति परिहरति—**छिद्रेति** ॥ ८२ ॥

**ननु सद्वस्तुपार्थक्यादसत्त्वं चेत्तदा कथम् ।**
**अव्यक्तमायावैषम्यादमायामयतापि नो ॥ ८३ ॥**

ननु वायोः सद्ब्रह्मविलक्षणत्वादसत्त्वलक्षणं मायामयत्वं यद्युच्यते तर्ह्यव्यक्तरूपमायावैलक्षण्यादमायामयत्वमपि किं न स्यादिति चोदयति—**नन्विति** ॥ ८३ ॥

**निस्तत्त्वरूपतैवात्र मायात्वस्य प्रयोजिका ।**
**सा शक्तिकार्ययोस्तुल्या व्यक्ताव्यक्तत्वभेदिनोः८४**

नाव्यक्तत्वं मायामयत्वे प्रयोजकं किंतु निस्तत्त्वं तत्तु मायायामिव वाय्वादावप्यस्तीति न मायामयत्वहानिरिति परिहरति—**निस्तत्त्वेति** ॥ ८४ ॥

**सदसत्त्वविवेकस्य प्रस्तुतत्वात्स चिन्त्यताम् ।**
**असतोऽवान्तरो भेद आस्तां तच्चिन्तयात्र किं ८५**

ननु शक्तिकार्ययोरुभयोरपि निस्तत्त्वरूपतायामविशिष्टायां

व्यक्ताव्यक्तत्वलक्षणो भेदः कुत इत्याशङ्क्य तद्विचारः प्रस्तुतानुपयुक्त इति परिहरति—**सदसत्त्वेति**। असतो मायातत्कार्यरूपस्यावान्तरभेदो व्यक्ताव्यक्तरूप इत्यर्थः ॥ ८५ ॥

**सद्वस्तु ब्रह्म शिष्टोंऽशो वायुर्मिथ्या यथा वियत्।**
**वासयित्वा चिरं वायोर्मिथ्यात्वं मरुतं त्यजेत् ॥**

फलितमाह—**सद्वस्त्विति**। वायौ यः सदंशस्तद्ब्रह्मरूपं शिष्टोंऽशो निस्तत्त्वादिर्वायोः स्वरूपम्। स च वायुः निस्तत्त्वरूपत्वादेव आकाशवन्मिथ्या। इत्थं वायोर्मिथ्यात्वं चिरं वासयित्वा मरुतं त्यजेत्। मरुत्सत्य इति बुद्धिं त्यजेदित्यर्थः ॥ ८६ ॥

**चिन्तयेद्वह्निमप्येवं मरुतो न्यूनवर्तिनम्।**
**ब्रह्माण्डावरणेष्वेषा न्यूनाधिकविचारणा ॥ ८७ ॥**

वायौ उक्तं विचारं तेजस्यप्यतिदिशति—**चिन्तयेदिति**। ननु 'सद्वस्तुन्येकदेशस्था माया तत्र' इत्यादिना वियदादीनां न्यूनाधिकभाव उक्तः स लोके न क्वापि दृश्यत इत्याशङ्क्याह—**ब्रह्माण्डेति** ॥ ८७ ॥

**वायोर्दशांशतो न्यूनो वह्निर्वायौ प्रकल्पितः।**
**पुराणोक्तं तारतम्यं दशांशैर्भूतपञ्चके ॥ ८८ ॥**

वायोः कियतांशेन न्यूनो वह्निरित्यत आह—**वायोरिति**। तस्य वास्तवत्वशङ्कां वारयति—**वायाविति**।

नन्वयं न्यूनाधिकभावः स्वकपोलकल्पित इत्याशङ्क्याह—पुराणोक्तमिति ॥ ८८ ॥

**वह्निरुष्णः प्रकाशात्मा पूर्वानुगतिरत्र च ।**
**अस्ति वह्निः स निस्तत्त्वः शब्दवान्स्पर्शवानपि ८९**

वह्नेः स्वरूपमाह—**वह्निरिति** । अत्रापि वायाविव कारणधर्मा अनुगता इत्याह—**पूर्वेति** । के ते धर्मा इत्याकाङ्क्षायामाह—**अस्तीति** ॥ ८९ ॥

**सन्मायाव्योमवाय्वंशैर्युक्तस्याग्नेर्निजो गुणः ।**
**रूपं तत्र सतः सर्वमन्यद्बुद्ध्या विविच्यताम् ॥९०॥**

एवमग्नौ कारणधर्मानुगत्यनुवादपूर्वकं स्वकीयं धर्मं दर्शयति—**सन्मायेति** । इत्थं सविशेषणं वह्निस्वरूपं व्युत्पाद्य इदानीं सद्वस्तुनोऽन्यत्सर्वं धर्मजातं मिथ्येति बुद्ध्या विविच्यताम् । पृथक् क्रियतामित्यर्थः ॥ ९० ॥

**सतो विवेचिते वह्नौ मिथ्यात्वे सति वासिते ।**
**आपो दशशतो न्यूनाः कल्पिता इति चिन्तयेत् ॥**

एवं वह्नेर्मिथ्यात्वनिश्चयानन्तरमपां मिथ्यात्वं चिन्तयेदित्याह—**सत इति** ॥ ९१ ॥

**सन्त्यापोऽमूः शून्यतत्त्वाः सशब्दस्पर्शसंयुताः ।**
**रूपवत्योऽन्यधर्मानुवृत्त्या स्वीयो रसो गुणः ॥९२॥**

अस्यापि कारणधर्मान्स्वधर्मांश्च विभज्य दर्शयति—**स-**

न्याप इति। शब्देन सह वर्तते इति सशब्दः सशब्द-श्चासौ स्पर्शश्च सशब्दस्पर्शः तेन युक्ता इत्यर्थः ॥ ९२ ॥

सतो विवेचितास्वप्सु तन्मिथ्यात्वे च वासिते।
भूमिर्दशांशतो न्यूना कल्पिताप्स्विति चिन्तयेत्॥

विवेकध्यानाभ्यामपां मिथ्यात्वं निश्चित्यानन्तरं भूमेर्मि-थ्यात्वं चिन्तनीयमित्याह—**सत इति** ॥ ९३ ॥

अस्ति भूस्तत्त्वशून्यास्यां शब्दस्पर्शौ सरूपकौ।
रसश्च परतो गन्धो नैजः सत्ता विविच्यताम् ९४

तस्या मिथ्यात्वचिन्तनाय तद्धर्मानपि विभजते—**अस्ति भूरिति**। तेभ्यः सत्तामात्रं पृथक् कर्तव्यमित्याह—**सत्तेति** ॥ ९४ ॥

पृथक्कृतायां सत्तायां भूमिर्मिथ्याऽवशिष्यते।
भूमेर्दशांशतो न्यूनं ब्रह्माण्डं भूमिमध्यगम् ॥९५॥

सत्तापृथक्करणे फलमाह—**पृथगिति**। इदानीं भौति-केभ्यो ब्रह्माण्डादिभ्यः सतो विवेचनाय तदवस्थानप्रकारं दर्शयति—**भूमेरिति** ॥ ९५ ॥

ब्रह्माण्डमध्ये तिष्ठन्ति भुवनानि चतुर्दश।
भुवनेषु वसन्त्येषु प्राणिदेहा यथायथम् ॥ ९६ ॥

**ब्रह्माण्डेति**। स्पष्टम् ॥ ९६ ॥

ब्रह्माण्डलोकदेहेषु सद्वस्तुनि पृथक्कृते ।
असन्तोऽण्डादयो भान्तु तद्भानेऽपीह का क्षतिः॥

तेषु सद्विवेचने फलमाह—ब्रह्माण्डेति ॥ ९७ ॥

भूतभौतिकमायानामसत्त्वेऽत्यन्तवासिते ।
सद्वस्त्वद्वैतमित्येषा धीर्विपर्येति न क्वचित् ॥९८॥

तद्भाने का क्षतिरित्युक्तमेवार्थं स्पष्टीकरोति—भूतेति । भूतानामाकाशादीनां भौतिकानां ब्रह्माण्डादीनां मायायाश्च तत्कारणभूताया मिथ्यात्वे विवेकध्यानाभ्यां चित्ते दृढं वासिते सति सद्वस्तुनोऽद्वैतत्वबुद्धिः कदाचिन्न विहन्यते इत्यर्थः ॥ ९८ ॥

सदद्वैतात्पृथग्भूते द्वैते भूम्यादिरूपिणि ।
तत्तदर्थक्रिया लोके यथा दृष्टा तथैव सा ॥ ९९ ॥

ननु भूम्यादीनामसत्त्वे विदुषो व्यवहारलोपः प्रसज्जेतेत्याशङ्क्य विवेकेन मिथ्यात्वनिश्चयेऽपि भूम्यादेः स्वरूपोपमर्दनाभावान्न व्यवहारो लुप्यत इत्याह—सदद्वैतादिति ॥ ९९ ॥

सांख्यकाणादबौद्धाद्यैर्जगद्भेदो यथा यथा ।
उत्प्रेक्ष्यतेऽनेकयुक्त्या भवत्वेष तथा तथा॥१००॥

ननु सत्तत्त्वस्याद्वैतरूपत्वे सांख्यादिभिरभिधीयमानस्य भेदस्य कुतो न निरासः क्रियते इत्याशङ्क्य व्यावहारिक-

भेदस्यास्माभिरभ्युपगतत्वान्न तन्निरासाय प्रयत्यते इत्याह —सांख्येति ॥ १०० ॥

**अवज्ञातं सदद्वैतं निःशङ्कैरन्यवादिभिः ।**
**एवं का क्षतिरस्माकं तद्द्वैतमवजानताम् ॥१०१॥**

ननु प्रमाणसिद्धस्य सत्वभेदस्य अवज्ञा अनुपपन्नेत्याशङ्क्याह—**अवज्ञातमिति** । यथान्यवादिभिः सांख्यादिभिः निःशङ्कैः श्रुत्यादिसिद्धस्यापि सदद्वैतस्यावज्ञा क्रियते श्रुतियुक्त्यनुभवावष्टम्भेनास्माभिस्तदीयद्वैतानादरणे किं हीयत इत्यर्थः ॥ १०१ ॥

**द्वैतावज्ञा सुस्थिता चेदद्वैते धीः स्थिरा भवेत् ।**
**स्थैर्ये तस्याः पुमानेष जीवन्मुक्त इतीर्यते ॥१०२॥**

ननु निष्प्रयोजनेयं द्वैतावज्ञा इत्याशङ्क्य जीवन्मुक्तिलक्षणप्रयोजनसद्भावान्मैवमित्याह—**द्वैतेति** ॥ १०२ ॥

**एषा ब्राह्मी स्थितिः पार्थ नैनां प्राप्य विमुह्यति ।**
**स्थित्वास्यामन्तकालेऽपि ब्रह्म निर्वाणमृच्छति ॥**

न केवलं जीवन्मुक्तिरेव प्रयोजनमपि तु विदेहमुक्तिरपीत्यभिप्रायेण कृष्णवाक्यमप्युदाहरति—**एषेति** ॥ १०३ ॥

**सदद्वैतेऽनृतद्वैते यदन्योन्यैक्यवीक्षणम् ।**
**तस्यान्तकालस्तद्भेदबुद्धिरेव न चेतरः ॥ १०४ ॥**

अन्तकालशब्देन वर्तमानदेहपातोऽभिधीयते इत्याशङ्कां वारयितुं विवक्षितमर्थमाह—**सदद्वैते इति** । सद्रूपेऽद्वैतेऽनृतरूपे द्वैते च यदन्योन्याध्यासलक्षणमैक्यज्ञानमस्ति तस्यैक्यभ्रमस्यान्तकालो नाम तयोरद्वैतद्वैतयोः सत्यानृतरूपेण भेदबुद्धिरेव नापरो वर्तमानदेहपात इत्यर्थः ॥ १०४ ॥

**यद्वान्तकालः प्राणस्य वियोगोऽस्तु प्रसिद्धितः ।**
**तस्मिन्कालेऽपि न भ्रान्तेर्गतायाः पुनरागमः १०५**

इदानीं लोकप्रसिद्धार्थस्वीकारेऽपि न दोष इत्यभिप्रायेणाह—**यद्वेति** ॥ १०५ ॥

**नीरोग उपविष्टो वा रुग्णो वा विलुठन्भुवि ।**
**मूर्च्छितो वा त्यजत्वेष प्राणान्भ्रान्तिर्न सर्वथा १०६**

उक्तमेवार्थं प्रपञ्चयति—**नीरोग इति** ॥ १०६ ॥

**दिने दिने स्वप्नसुप्त्योरधीते विस्मृतेऽप्ययम् ।**
**परेद्युर्नानधीतः स्यात्तद्वद्विद्या न नश्यति ॥१०७॥**

ननु प्राणवियोगकाले मूर्च्छादिना ज्ञाननाशे भ्रान्तिः

स्यादेव इत्याशङ्क्य ज्ञाननाशाभावे दृष्टान्तमाह—**दिने दिन इति** । यथा प्रत्यहमधीते वेदे स्वप्नसुषुप्त्याद्यवस्थायां विस्मृतेऽपि परेद्युरनधीतवेदत्वं नास्ति तथा मृतिकालेऽपि तत्त्वानुसंधानाभावेऽपि ज्ञाननाशाभाव इत्यर्थः ॥ १०७ ॥

**प्रमाणोत्पादिता विद्या प्रमाणं प्रबलं विना ।**
**न नश्यति न वेदान्तात्प्रबलं मानमीक्ष्यते ॥१०८॥**

ज्ञाननाशाभावमेवोपपादयति—**प्रमाणेति** ॥ १०८ ॥

**तस्माद्वेदान्तसंसिद्धं सदद्वैतं न बाध्यते ।**
**अन्तकालेऽप्यतो भूतविवेकान्निर्वृतिः स्थिता ॥**

**इति पञ्चदश्यां पञ्चभूतविवेकः समाप्तः ॥ २ ॥**

उपपादितमर्थमुपसंहरति—**तस्मादिति** ॥ १०९ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीभारतीतीर्थविद्यारण्यमुनिवर्यकिङ्करेण श्रीरामकृष्णाख्येन विदुषा विरचिता महाभूतविवेकदीपिका समाप्ता ॥ २ ॥

---

# पञ्चकोशविवेकप्रकरणम् ३

**गुहाहितं ब्रह्म यत्तत्पञ्चकोशविवेकतः ।**
**बोद्धुं शक्यं ततः कोशपञ्चकं प्रविविच्यते ॥ १ ॥**

नत्वा श्रीभारतीतीर्थविद्यारण्यमुनीश्वरौ ।
पञ्चकोशविवेकस्य कुर्वे व्याख्यां समासतः ॥ १ ॥

तैत्तिरीयोपनिषत्तात्पर्यव्याख्यानरूपं पञ्चकोशविवेकाख्यं प्रकरणमारभमाण आचार्यः तत्र श्रोतृप्रवृत्तिसिद्धये सप्रयोजनमभिधेयं सूचयन् मुखतश्चिकीर्षितं ग्रन्थं प्रतिजानीते—**गुहाहितमिति** । 'यो वेद निहितं गुहायां परमे व्योमन्' इति श्रुत्या गुहाहितत्वेनाभिहितं यत् ब्रह्म अस्ति तत् गुहाशब्दवाच्यान्नमयादिकोशपञ्चकविवेकेन ज्ञातुं शक्यते, ततस्तेषां कोशानां पञ्चकं प्रकर्षेण प्रत्यगात्मनः सकाशाद्विभज्य प्रदर्श्यत इत्यर्थः ॥ १ ॥

**देहादभ्यन्तरः प्राणः प्राणादभ्यन्तरं मनः ।**
**ततः कर्ता ततो भोक्ता गुहा सेयं परम्परा ॥२॥**

ननु केयं गुहा यस्यां निहितं ब्रह्म कोशपञ्चकविवेकेन अवबुध्यते इत्याशङ्क्य श्रुत्या गुहाशब्देन विवक्षितमर्थमाह—**देहादिति** । देहादन्नमयात्प्राणः प्राणमयः अभ्यन्तरः

आन्तरः प्राणात्प्राणमयान्मनः मनोमयः अभ्यन्तर आन्तरस्ततो मनोमयात्कर्ता विज्ञानमय आन्तर इत्यनुषज्यते। ततो विज्ञानमयाद्भोक्ता आनन्दमयः सोऽपि पूर्ववदान्तर इत्यर्थः। सेयं अन्नमयाद्यानन्दमयान्तानां परम्परा गुहाशब्देनोच्यत इत्यर्थः ॥ २ ॥

**पितृभुक्तान्नजाद्वीर्याज्जातोऽन्नेनैव वर्धते।**
**देहः सोऽन्नमयो नात्मा प्राक् चोर्ध्वं तदभावतः ३**

इदानीमन्नमयस्य स्वरूपं तदनात्मत्वं च दर्शयति—**पितृभुक्तेति**। पितृभुक्तान्नजात् मातृपितृभुक्तात् यवव्रीह्यादिलक्षणात् अन्नाज्जायमानं यद्वीर्यमस्ति तस्माद्वीर्यात् यो देहो जातः यश्च जननानन्तरं क्षीराद्यन्नेनैव वर्धते स देहोऽन्नमयोऽन्नस्य विकारः स आत्मा न भवति। कुत इत्यत आह—**प्रागिति**। जन्मनः प्राक् मरणादूर्ध्वं च तदभावतः। तस्य देहस्याभावादित्यर्थः। विवादाध्यासितो देह आत्मा न भवति कार्यत्वात् घटादिवदिति भावः ॥ ३ ॥

**पूर्वजन्मन्यसन्नेतज्जन्म संपादयेत्कथम्।**
**भाविजन्मन्यसत्कर्म न भुञ्जीतेह संचितम् ॥४॥**

हेतुरस्तु साध्यं मा भूद्विपक्षे बाधकाभावादप्रयोजकोऽयं हेतुरित्याशङ्क्य अकृताभ्यागमकृतविप्रणाशाख्यबाधकसद्भावान्मैवमिति परिहरति—**पूर्वजन्मनीति**। एतद्देहरूप-

स्यात्मनः पूर्वस्मिन् जन्मन्यसत्त्वादेतज्जन्महेत्वदृष्टासंभवेऽप्यस्य जन्मनोऽप्यङ्गीक्रियमाणत्वादकृताभ्यागमः प्रसज्जेत । तथा भाविजन्मन्यप्यस्य देहरूपस्यात्मनोऽसत्त्वादभावादिहानुष्ठितयोः पुण्यपापयोः फलभोक्तुरभावेन भोगमन्तरेणापि कर्मक्षयः प्रसज्जेत अयं कृतविप्रणाशः । एवं कृतनाशाकृताभ्यागमरूपबाधकसद्भावादात्मनः कार्यत्वं नाङ्गीकर्तव्यमिति भावः ॥ ४ ॥

**पूर्णो देहे बलं यच्छन्नक्षाणां यः प्रवर्तकः ।**
**वायुः प्राणमयो नासावात्मा चैतन्यवर्जनात् ॥५॥**

एवमन्नमयकोशस्यानात्मत्वं प्रदर्श्य प्राणमयकोशस्य स्वरूपं तदनात्मत्वं च दर्शयति—**पूर्ण इति** । यो वायुर्देहे पूर्णः पादादिमस्तकपर्यन्तं व्याप्तः सन्बलं यच्छन् व्यानरूपेण सामर्थ्यं प्रयच्छन् अक्षाणां चक्षुरादीनामिन्द्रियाणां प्रवर्तकः प्रेरको वर्तते स वायुः प्राणमय इत्युच्यते । असावप्यात्मा न भवति । तत्र हेतुमाह—**चैतन्येति** । विवादाध्यासितः प्राण आत्मा न भवति जडत्वाद्घटादिवदिति भावः ॥ ५ ॥

**अहन्तां ममतां देहे गेहादौ च करोति यः ।**
**कामाद्यवस्थया भ्रान्तो नासावात्मा मनोमयः ॥६॥**

इदानीं मनोमयस्वरूपदर्शनपूर्वकं तस्याप्यनात्मत्वमाह

—**अहन्तामिति**। देहेऽहन्तामहंभावं गृहादौ ममतां मदीयत्वाभिमानं च यः करोति असौ मनोमय इति स आत्मा न भवति । कुत इत्यत आह—**कामादीति**। हेतुगर्भं विशेषणम् । कामक्रोधादिवृत्तिमत्त्वेनानियतस्वभावत्वादित्यर्थः । मनोमय आत्मा न भवति विकारित्वाद्देहवदिति भावः ॥ ६ ॥

**लीना सुप्तौ वपुर्बोधे व्याप्नुयादानखाग्रगा ।**
**चिच्छायोपेतधीर्नात्मा विज्ञानमयशब्दभाक् ॥७॥**

अनन्तरं कर्तृशब्दवाच्यस्य विज्ञानमयस्य स्वरूपं प्रदर्शयंस्तदनात्मत्वं दर्शयति—**लीनेति** । या चिच्छायोपेता धीश्चिदाभासयुक्ता बुद्धिः सुप्तौ सुप्तिकाले लीना विलीना सती बोधे जागरणकाले आनखाग्रगा नखाग्रपर्यन्तं वर्तमाना सती वपुः शरीरं व्याप्नुयात् संव्याप्य वर्तते सा विज्ञानमयशब्दभाक् विज्ञानमयशब्देनोच्यमाना । असावप्यात्मा न भवति विलयाद्यवस्थत्वात् घटादिवदित्यर्थः ॥ ७ ॥

**कर्तृत्वकरणत्वाभ्यां विक्रियेतान्तरिन्द्रियम् ।**
**विज्ञानमनसी अन्तर्बहिश्चैते परस्परम् ॥ ८ ॥**

ननु मनोबुद्ध्योरन्तःकरणत्वाविशेषात् मनोमयविज्ञानमयरूपेण कोशद्वयकल्पनानुपपन्नेत्याशङ्क्य कर्तृत्वकरणत्वाभ्यां भेदसद्भावाद्घटत एव मनोमयत्वादिभेद इत्याह—

**कर्तृत्वेति** । अन्तरिन्द्रियमन्तःकरणं कर्तृत्वकरणत्वाभ्यां कर्तृरूपेण करणरूपेण च विक्रियेत। परिणमेतेत्यर्थः । एते कर्तृकरणे विज्ञानमनसी विज्ञानमनःशब्दवाच्ये भवतः । एते च परस्परं अन्तर्बहिर्भावेन वर्तेते । अतः कोशद्वय-मुपपद्यत इत्यर्थः ॥ ८ ॥

**काचिदन्तर्मुखा वृत्तिरानन्दप्रतिबिम्बभाक् ।**
**पुण्यभोगे भोगशान्तौ निद्रारूपेण लीयते ॥ ९ ॥**

इदानीं भोक्तृशब्दवाच्यस्य आनन्दमयस्य अनात्मत्वं दर्शयितुं तस्य च स्वरूपमाह—**काचिदिति** । पुण्यभोगे पुण्यकर्मफलानुभवकाले काचिद्धीवृत्तिरन्तर्मुखा सती आ-नन्दप्रतिबिम्बभाक् आत्मस्वरूपस्यानन्दस्य प्रतिबिम्बं भ-जते, सैव भोगशान्तौ पुण्यकर्मफलभोगोपरमे सति निद्रा-रूपेण लीयते विलीना भवति सा वृत्तिरानन्दमय इत्यभि-प्रायः ॥ ९ ॥

**कादाचित्कत्वतोऽनात्मा स्यादानन्दमयोऽप्ययम्**
**बिम्बभूतो य आनन्द आत्मासौ सर्वदास्थितेः १०**

तस्याऽनात्मत्वमाह—**कादाचित्कत्वत इति** । अय-मानन्दमयोऽपि कादाचित्कत्वादात्मा न स्यात् । अभ्रा-दिपदार्थवदित्यर्थः । ननु विद्यमानानामानन्दमयादीनां सर्वेषामात्मत्वनिरासे नैरात्म्यं प्रसज्जेतेत्याशङ्क्याह—**बिम्ब-**

भूत इति। बुद्ध्यादौ प्रतिबिम्बतयावस्थितस्य प्रिया-दिशब्दवाच्यस्य आनन्दमयस्य बिम्बभूतः कारणभूतो य आनन्दः असावेव आत्मा भवति। कुत इत्यत आह—**सर्वदेति**। नित्यत्वादित्यर्थः। विवादाध्यासित आनन्द आत्मा भवितुमर्हति नित्यत्वात्। य आत्मा न भवति नासौ नित्यो यथा देहादिः। गगनादेरुत्पत्तिमत्त्वेनानित्य-त्वान्नानैकान्तिकतेति भावः॥ १०॥

**ननु देहमुपक्रम्य निद्रानन्दान्तवस्तुषु।**
**मा भूदात्मत्वमन्यस्तु न कश्चिदनुभूयते॥ ११॥**

चोदयति—**नन्विति**। अन्नमयाद्यानन्दमयान्तानां कोशानामुक्तैर्हेतुभिरात्मत्वं न घटते चेन्मा घटिष्ट, अन्य-स्त्वात्माऽनुपलभ्यमानत्वान्नैव संभवतीति॥ ११॥

**बाढं निद्रादयः सर्वेऽनुभूयन्ते न चेतरः।**
**तथाप्येतेऽनुभूयन्ते येन तं को निवारयेत्॥१२॥**

परिहरति—**बाढमिति**। अत्र निद्राशब्देन निद्रा-नन्दो लक्ष्यते, निद्रादयो देहान्ता उपलभ्यन्ते, अन्यो नानुभूयत इति यदुक्तं तत्सत्यम्। कथं तर्हि तदतिरिक्त-स्यात्मनोऽङ्गीकार इत्यत आह—**तथापीति**। अन्यस्यानु-पलभ्यमानत्वेऽपि यद्बलादेतेषां आनन्दमयादीनामुपलभ्य-मानता भवति सोऽनुभवः कथं नाङ्गीक्रियत इत्यर्थः॥ १२॥

**स्वयमेवानुभूतित्वाद्विद्यते नानुभाव्यता ।**
**ज्ञातृज्ञानान्तराभावादज्ञेयो न त्वसत्तया ॥ १३ ॥**

ननूक्तेभ्योऽन्य आत्मा यदि विद्यते तर्ह्युपलभ्येत, नोपलभ्यते अतो नास्तीत्याशङ्क्याह—**स्वयमिति** । आनन्दमयादीनां साक्षिणोऽनुभवरूपत्वादेवानुभाव्यत्वं नास्तीति । ननु अनुभवरूपत्वेऽप्यनुभाव्यत्वं कुतो न स्यादित्याशङ्क्याह—**ज्ञात्रिति** । ज्ञाता च ज्ञानं च ज्ञातृज्ञाने अन्ये ज्ञातृज्ञाने ज्ञातृज्ञानान्तरे तयोरभावः तस्मादज्ञेयो ज्ञातविषयो न भवतीति ज्ञात्राद्यभावाद्वा न ज्ञायते स्वस्यैवासत्त्वाद्वा किमत्र निगमने कारणमित्यत आह—**न त्वसत्तयेति** । निद्रानन्दादिसाक्षित्वेनासत्त्वस्य पूर्वमेव निराकृतत्वादिति भावः ॥ १३ ॥

**माधुर्यादिस्वभावानामन्यत्र स्वगुणार्पिणाम् ।**
**स्वस्मिंस्तदर्पणापेक्षा नो न चास्त्यन्यदर्पकम् ॥ १४ ॥**

अनुभवरूपस्यात्मनोऽनुभाव्यत्वाभावे दृष्टान्तमाह—**माधुर्यादिति** । आदिशब्देनाम्लादयो गृह्यन्ते । माधुर्यादयः स्वभावाः सहजा धर्मविशेषा येषां ते माधुर्यादिस्वभावा गुडादयस्तेषामन्यत्र स्वसंसृष्टपदार्थेषु चणकादिषु स्वगुणार्पिणां स्वगुणान्माधुर्यादीनर्पयन्तीति स्वगुणार्पिणस्तेषां स्वस्मिन्स्वस्वरूपे गुडादिलक्षणे तदर्पणापेक्षा तेषां

माधुर्यादीनां अर्पणे संपादनेऽपेक्षा आकाङ्क्षा माधुर्यादिकं केनचित्संपादनीयमित्येवंरूपा नो नैव विद्यते । किंचान्यदर्पकं नास्ति । गुडादीनां माधुर्यादिप्रदं वस्त्वन्तरं नास्तीत्यर्थः ॥ १४ ॥

**अर्पकान्तरराहित्येऽप्यस्त्येषां तत्स्वभावता ।**
**मा भूत्तथानुभाव्यत्वं बोधात्मा तु न हीयते ॥१५॥**

सदृष्टान्तं फलितमाह—**अर्पकान्तरेति** । माधुर्यादिसमर्पकवस्त्वन्तराभावेऽपि येषां गुडादीनां माधुर्यादिस्वभावता विद्यते एवमात्मनोऽप्यनुभवविषयत्वं मा भूत्, अनुभवरूपता तु भवत्येवेत्यर्थः ॥ १५ ॥

**स्वयंज्योतिर्भवत्येष पुरोऽस्माद्भासतेऽखिलात् ।**
**तमेव भान्तमन्वेति तद्भासा भास्यते जगत् ॥१६॥**

उक्तार्थे प्रमाणमाह—**स्वयमिति** । 'अत्रायं पुरुषः स्वयंज्योतिर्भवति' 'अस्मात्सर्वस्मात्पुरतः सुविभातम्' । 'तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति' इत्यादिश्रुतयः आत्मनः स्वप्रकाशत्वं बोधयन्तीत्यर्थः ॥१६॥

**येनेदं जानते सर्वं तत्केनान्येन जानताम् ।**
**विज्ञातारं केन विन्द्याच्छक्तं वेद्ये तु साधनम् १७**

'येनेदं सर्वं विजानाति तं केन विजानीयाद्विज्ञातारमरे केन विजानीयात्' इति वाक्यमर्थतः पठति—**येनेद-**

**मिति** । येन साक्षिचैतन्यरूपेण आत्मना इदं सर्वं दृश्यजातं जानते प्राणिनः तं साक्षिणमात्मानमन्येन केन साक्ष्यभूतेन जडेन जानतामवगच्छेयुः । पुमांस इति शेषः । अस्यैव वाक्यस्य तात्पर्यमाह—**विज्ञातारमिति** । दृश्यजातस्य ज्ञातारं केन दृश्यभूतेन विन्द्याद्विजानीयात् । न केनापि जानातीत्यर्थः । ननु मनसा ज्ञास्यतीत्याशङ्क्याह—**शक्तमिति** । साधनं तु ज्ञानसाधनं तु मनः वेद्ये ज्ञातव्यविषये शक्तं समर्थं न तु ज्ञातर्यात्मनि । 'नैव वाचा न मनसा' इत्यादिश्रुतेः । स्वस्यापि ज्ञेयत्वे कर्मकर्तृत्वविरोधाच्चेति भावः ॥ १७ ॥

**स वेत्ति वेद्यं तत्सर्वं नान्यस्तस्यास्ति वेदिता ।**
**विदिताविदिताभ्यां तत्पृथग्बोधस्वरूपकम् ॥१८॥**

आत्मनः स्वप्रकाशत्वे एव 'स वेत्ति वेद्यं न च तस्यास्ति वेत्ता' 'अन्यदेव तद्विदितादथो अविदितादधि' इति वाक्यद्वयमपि प्रमाणमिति मन्वानस्तद्वाक्यद्वयमर्थतः पठति—**स वेत्तीति** । स आत्मा यद्यद्वेद्यं तत्तत्सर्वं वेत्ति । तस्यात्मनो वेदिता ज्ञाता अन्यो नास्ति, तद्बोधस्वरूपकं ब्रह्म विदिताविदिताभ्यां—विदितं ज्ञानेन विषयीकृतं, अविदितमज्ञानेनावृतं ताभ्यां—पृथग्विलक्षणम् । बोधस्वरूपत्वादेवेत्यर्थः ॥ १८ ॥

**बोधेऽप्यनुभवो यस्य न कथंचन जायते ।**
**तं कथं बोधयेच्छास्त्रं लोष्टं नरसमाकृतिम् ॥१९॥**

ननु विदिताविदितातिरिक्तो बोधो नानुभूयत इत्याशङ्क्य विदितविशेषणस्य वेदनस्यैव बोधस्वरूपत्वात्तदनुभवाभावे विदितस्याप्यनुभवाभावप्रसङ्गाद्बोधानुभवोऽवश्यमङ्गीकर्तव्य इति सोपहासमाह—**बोधेऽपीति** । यस्य मन्दस्य बोधेऽपि घटादिस्फुरणरूपेऽप्यनुभवः साक्षात्कारः कथंचन कथमपि न जायते नोत्पद्यते तं नरसमाकृतिं नरसमाकारं लोष्टं लोष्टवज्जडं मनुष्यं शास्त्रं कथं बोधयेत् । न कथमपि बोधयेदित्यर्थः ॥ १९ ॥

**जिह्वा मेऽस्ति न वेत्युक्तिर्लज्जायै केवलं यथा ।**
**न बुध्यते मया बोधो बोद्धव्य इति तादृशी ॥२०॥**

'बोधो न बुध्यते' इत्युक्तिरेव व्याहतेति सदृष्टान्तमाह—**जिह्वेति** । मे जिह्वा अस्ति न वेत्युक्तिर्भाषणं यथा लज्जायै केवलं लज्जाजननायैव भवति न बुद्धिमत्त्वज्ञापनाय । जिह्वया विना भाषणानुपपत्तेः । एवं मया बोधो न बुध्यते इतः परं बोद्धव्य इत्युक्तिरपि तादृशी लज्जाहेतुरेव । बोधेन विना तद्व्यवहारासिद्धेरित्यर्थः ॥ २० ॥

**यस्मिन्यस्मिन्नस्ति लोके बोधस्तत्तदुपेक्षणे ।**
**यद्बोधमात्रं तद्ब्रह्मेत्येवंधीर्ब्रह्मनिश्चयः ॥ २१ ॥**

भवत्वेवंविधः स बोधस्तथापि प्रकृते ब्रह्मावबोधे किमायातमित्याशङ्क्याह—**यस्मिन्निति** । लोके जगति यस्मिन्यस्मिन्घटादिलक्षणे विषये बोधो ज्ञानमस्ति तत्तदुपेक्षणे तस्य तस्य घटादिविषयस्योपेक्षणेऽनादरणे कृते सति यद्बोधमात्रं घटादि सर्वत्रानुस्यूतं यत् स्फुरणमस्ति तदेव ब्रह्मेत्येवंरूपा धीर्बुद्धिर्ब्रह्मनिश्चयः । ब्रह्मावगतिरित्यर्थः २१

**पञ्चकोशपरित्यागे साक्षिबोधावशेषतः ।**
**स्वस्वरूपं स एव स्याच्छून्यत्वं तस्य दुर्घटम् ॥२२॥**

ननु घटादिविषयोपेक्षया तदर्थानुभवरूपं ब्रह्मावगम्यते चेत्तर्हि कोशपञ्चकविवेकोऽयं निष्प्रयोजनः स्यादित्याशङ्क्य ब्रह्मणः प्रत्यग्रूपताज्ञानेन विना संसारानिवृत्तेः तथात्वावबोधोपयोगित्वान्न तस्यापि वैयर्थ्यमित्याह—**पञ्चकोशेति** । पञ्चानां कोशानामन्नमयादीनां परित्यागे बुध्यानात्मत्वनिश्चये कृते तत्साक्षिरूपस्य बोधस्यावशेषणात् स साक्षिरूपो बोध एव स्वस्वरूपं निजरूपं ब्रह्मैव स्यात् । नन्वन्नमयादीनामनुभवसिद्धानां त्यागे शून्यपरिशेषः स्यादित्याशङ्क्याह-**शून्यत्वमिति** । तस्य साक्षिबोधस्य शून्यत्वं दुर्घटम् । दुःसंपाद्यमित्यर्थः ॥ २२ ॥

**अस्ति तावत्स्वयं नाम विवादाविषयत्वतः ।**
**स्वस्मिन्नपि विवादश्चेत्प्रतिवाद्यत्र को भवेत् ॥२३॥**

दुर्घटत्वमेवोपपादयति—**अस्तीति** । स्वयंशब्दवाच्यं स्वस्वरूपं लौकिकानां वैदिकानां च मते तावदस्त्येव । कुत इत्यत आह—**विवादेति** । स्वस्वरूपस्य विप्रतिपत्तिविषयत्वाभावादित्यर्थः । विपक्षे बाधकमाह—**स्वस्मिन्निति** । स्वात्मन्यपि विप्रतिपत्तौ सत्यां अत्रास्यां विप्रतिपत्तौ कः प्रतिवादी स्यात् । न कोपीत्यर्थः ॥ २३ ॥

**स्वासत्त्वं तु न कस्मैचिद्रोचते विभ्रमं विना ।**
**अत एव श्रुतिर्बाधं ब्रूते चासत्त्ववादिनः ॥ २४ ॥**

ननु स्वासत्त्ववाद्येव प्रतिवादी भविष्यतीत्याशङ्क्य तथाविधः कोऽपि नास्तीत्याह—**स्वासत्त्वमिति** । भ्रान्तिमेकां विहायाऽन्यस्यां दशायां स्वस्याभावः केनापि नाङ्गीक्रियत इत्यर्थः । कुत एवं निश्चीयत इत्याशङ्क्याह—**अत इति** । यतः कस्मैचिन्न रोचते अतएव श्रुतिरपि असत्त्ववादिनो बाधं ब्रूते ॥ २४ ॥

**असद्ब्रह्मेति चेद्वेद स्वयमेव भवेदसत् ।**
**अतोऽस्य मा भूद्वेद्यत्वं स्वसत्वं त्वभ्युपेयताम् २५**

केयं श्रुतिरित्याकाङ्क्षायां असन्नेवेत्यादिकां तां श्रुतिमर्थतः पठति—**असदिति** । यदि ब्रह्मासदिति जानीयात्तर्हि स्वयमेव ब्रह्मणोऽसत्त्वज्ञानी असद्भवेत् । स्वस्यैव ब्रह्मरूपत्वादित्यर्थः । फलितमाह—**अत इति** ॥ २५ ॥

**कीदृक्तर्हीति चेत्पृच्छेदीदृक्ता नास्ति तत्र हि ।**
**यदनीदृगताहृक् च तत्स्वरूपं विनिश्चिनु ॥ २६ ॥**

इदानीमात्मनः स्वप्रकाशत्वं वक्तुकामस्तस्य वेद्यत्वाभावे कीदृक्स्वरूपमिति प्रश्नमुत्थापयति—**कीदृगिति** । अयमभिप्रायः—आत्मन ईदृक्त्वादिना केनचिद्रूपेण वैशिष्ट्याङ्गीकारे तेनैव रूपेण वेद्यत्वं स्यात् तदनङ्गीकारे शून्यत्वमिति । सत्यम् । ईदृक्त्वाद्यङ्गीकारे तथैव वेद्यत्वं तत्तु नाङ्गीक्रियत इत्याह—**ईदृक्तेति** । उपलक्षणमेतत्ताहृक्त्वस्यापि । उभयाभावमेवाह—**यदनीदृगिति** ॥ २६ ॥

**अक्षाणां विषयस्त्वीदृक्परोक्षस्ताहृगुच्यते ।**
**विषयी नाक्षविषयः स्वत्वान्नास्य परोक्षता ॥२७॥**

नहि प्रतिज्ञामात्रेणार्थसिद्धिरित्याशङ्क्य ईदृक्ताहृक्शब्दयोरर्थमभिदधानस्तदवाच्यत्वमुपपादयति—**अक्षाणामिति** । प्रत्यक्षस्यैव घटादेरीदृक्शब्दवाच्यत्वं दृष्टं, परोक्षस्यैव धर्मादेस्ताहृक्शब्दवाच्यत्वं, द्रष्टुरात्मनस्तु इन्द्रियजन्यज्ञानविषयत्वाभावान्नेदृक्त्वं, स्वत्वेनैव परोक्षत्वाभावान्न ताहृक्त्वमित्यर्थः ॥ २७ ॥

**अवेद्योऽप्यपरोक्षोऽतः स्वप्रकाशो भवत्ययम् ।**
**सत्यं ज्ञानमनन्तं चेत्यस्तीह ब्रह्मलक्षणम् ॥ २८ ॥**

तर्हि शून्यमिति द्वितीयं पक्षं फलदर्शनव्याजेन परि-

हरति—**अवेद्य इति**। इन्द्रियजन्यज्ञानविषयत्वाभावेऽप्यपरोक्षत्वात्स्वप्रकाश इत्यर्थः। अत्रायं प्रयोगः—आत्मा स्वप्रकाशः संवित्कर्मतामन्तरेणाऽपरोक्षत्वात्संवेदनवदिति। न च विशेषणासिद्धो हेतुः। आत्मनः संवित्कर्मत्वे कर्मकर्तृभावविरोधप्रसङ्गात्। स्वस्वरूपेण कर्तृत्वं विशिष्टरूपेण कर्मत्वमित्यविरोध इति चेत् गमनक्रियायामपि एकस्यैव स्वरूपेण कर्तृत्वं विशिष्टरूपेण कर्मत्वमित्यतिप्रसङ्गात्। न च साधनविकलो दृष्टान्तः। संवेदनस्य संवेदनान्तरापेक्षायामनवस्थानादिति तर्कमते घटो घटज्ञानेन भासते घटज्ञानमनुव्यवसायेनेति संवेदनवत्स्वप्रकाशे दृष्टान्तः साधनविकल इति चेन्न, ज्ञानस्य ज्ञानान्तरेण भासनाभावात्साधनविकलः॥ नन्वात्मनः स्वप्रकाशत्वेन सिद्धत्वेऽपि ब्रह्मलक्षणाभावात् न ब्रह्मत्वसिद्धिरित्याशङ्क्य तल्लक्षणं तत्र योजयति—**सत्यमिति**। 'सत्यं ज्ञानमनन्तं ब्रह्म' इति श्रुत्या यद्ब्रह्मणो लक्षणमुक्तं तदात्मनि विद्यत इत्यर्थः॥२८॥

**सत्यत्वं बाधराहित्यं जगद्बाधैकसाक्षिणः।**
**बाधः किंसाक्षिको ब्रूहि नत्वसाक्षिक इष्यते २९**

आत्मनः सत्यत्वोपपादनाय तावत्सत्यत्वस्य लक्षणमाह—**सत्यत्वमिति**। बाधशून्यत्वं सत्यत्वम् 'सत्यमबाध्यं बाध्यं मिथ्येति तद्विवेकः' इति पूर्वाचार्यैरुक्तत्वात्। अस्तु

प्रकृते किमायातमित्यत आह—**जगदिति**। जगतः स्थूल-सूक्ष्मशरीरादिलक्षणस्य यो बाधः सुप्तिमूर्च्छासमाधिषु अविद्यमानता तत्साक्षित्वेनैव वर्तमानस्यात्मनो बाधः किं-साक्षिकः कः साक्षी अस्य बाधस्यासौ किंसाक्षिकः। न कोऽपि साक्षी विद्यत इत्यर्थः। असाक्षिकोऽप्यात्मबाधः किं न स्यादित्याशङ्क्याह—**नत्विति**। साक्षिरहितो बाधो नाभ्युपगन्तव्योऽन्यथातिप्रसङ्गादिति भावः॥ २९॥

**अपनीतेषु मूर्तेषु ह्यमूर्तं शिष्यते वियत्।**
**शक्येषु बाधितेष्वन्ते शिष्यते यत्तदेव तत्॥३०॥**

उक्तमर्थं दृष्टान्तेन स्पष्टयति—**अपनीतेष्विति**। मूर्तेषु गृहादिगतेषु घटादिष्वपनीतेषु गृहादिभ्यो निःसारि-तेषु सत्सु यथापनेतुमशक्यं नभ एवावशिष्यते एवं स्व-व्यतिरिक्तेषु मूर्तामूर्तेषु देहेन्द्रियादिषु निराकर्तुं शक्येषु 'नेतिनेति' इति श्रुत्या निराकृतेषु सत्सु अन्तेऽवसाने सर्व-निराकरणसाक्षित्वेन यो बोधोऽवशिष्यते स एव बाधरहित आत्मेत्यर्थः॥ ३०॥

**सर्वबाधे न किंचिच्चेद्यन्न किंचित्तदेव तत्।**
**भाषा एवात्र भिद्यन्ते निर्बाधं तावदस्ति हि॥३१॥**

ननु प्रतीयमानस्य सर्वस्यापि निषेधे किंचिन्नाव-शिष्यते, अतः कथं 'शिष्यते यत्तदेव त'दित्यवशिष्टस्यात्म-

त्वमुच्यत इति शङ्कते—**सर्वबाध इति**। न किंचिदवशिष्यते इति वदता तथापि प्रयोगसिद्धये सर्वाभावविषयं ज्ञानमवश्यमभ्युपेतव्यम्, अतस्तदेवास्मदभिमतात्मस्वरूपमित्यभिप्रायेण परिहरति—**यन्नेति**। न किंचिदितिशब्देन यच्चैतन्यमुच्यते तदेव तद्ब्रह्मेत्यर्थः। ननु न किंचिदित्यभाववाचकेन न किंचिच्छब्देन कथं चैतन्यमुच्यत इत्याशङ्क्य बाधसाक्षिणोऽवश्यमभ्युपेयत्वादभिधायकशब्देष्वेव विप्रतिपत्तिर्नाभिधेये इति परिहरति—**भाषेति**। अत्र बाधा साक्षिणि प्रत्यगात्मनि भाषा एव न किंचित्साक्षीत्यादिशब्दा एव भिद्यन्ते। निर्बाधं बाधरहितं साक्षिचैतन्यं तु विद्यत एवेत्यर्थः॥ ३१॥

**अत एव श्रुतिर्बाध्यं बाधित्वा शेषयत्यदः।**
**स एष नेति नेत्यात्मेत्यतद्व्यावृत्तिरूपतः॥ ३२॥**

उक्तमर्थं श्रुत्यारूढं करोति—**अत एवेति**। यतः साक्षिचैतन्यमबाध्यमत एव 'स एष नेति नेत्यात्मा' इति श्रुतिरतद्व्यावृत्तिरूपतोऽनात्मपदार्थनिराकरणद्वारेण बाध्यं निराकरणयोग्यं सर्वमनात्मकं वस्तुजातं बाधित्वा निराकृत्य अदो निराकर्तुमशक्यं प्रत्यक्स्वरूपं शेषयत्यवशेषयति॥ ३२॥

**इदंरूपं तु यद्यावत्तत्त्यक्तुं शक्यतेऽखिलम्।**
**अशक्यो ह्यनिदंरूपः स आत्मा बाधवर्जितः॥ ३३॥**

नेतिनेतीतिश्रुतिर्बाधयोग्यं बाधित्वा बाधितुमशक्यमवशेषयतीत्युक्तं, तत्र कीदृशं बाधितुं शक्यं कीदृशमशक्यमिति विवक्षायां तदुभयं विभज्य ते दर्शयति—**इदंरूपमिति**। इदंरूपमित्येवंरूपं दृश्यत्वेनानुभूयमानं रूपं स्वरूपं यस्य देहादेस्तदिदंरूपम्। तुशब्दोऽवधारणे। यद्यावदिति पदद्वयं सर्वदृश्योपसंग्रहार्थम्। एवं च सति यद्दृश्यं तदखिलं त्यक्तुं शक्यत एवेत्यर्थः संपद्येत। अनिदंरूपः प्रत्यक्त्वेनेदंतयावगन्तुं अयोग्यः साक्षी अशक्यस्त्यक्तुमित्यर्थः। हीतिनिपातेन प्रसिद्धिद्योतकेन त्यक्तुः स्वरूपत्वेन त्यागायोग्यतां सूचयति। फलितमाह—**आत्मेति**। यो बाधरहितः साक्षी स एवात्मा नाहङ्कारादिर्दृश्य इत्यर्थः॥ ३३॥

**सिद्धं ब्रह्मणि सत्यत्वं ज्ञानत्वं तु पुरेरितम्।**
**स्वयमेवानुभूतित्वादित्यादिवचनैः स्फुटम्॥३४॥**

भवत्वात्मनोऽबाध्यत्वं प्रकृते किमायातमित्यत आह—**सिद्धमिति**। ब्रह्मणि ब्रह्मलक्षणे यत्सत्यत्वमभिहितं तदात्मनि सिद्धम्। भवतु सत्यत्वं, ज्ञानत्वं कथमित्याकाङ्क्षायां तत्पूर्वमेवोपपादितमित्याह—**ज्ञानत्वमिति**। 'स्वयमेवानुभूतित्वाद्विद्यते नानुभाव्यता' इत्यादिभिर्वचनैर्ज्ञानरूपत्वं पूर्वमेव सम्यगभिहितमित्यर्थः॥ ३४॥

**न व्यापित्वाद्देशतोऽन्तो नित्यत्वान्नापि कालतः ।**
**न वस्तुतोऽपि सार्वात्म्यादानन्त्यं ब्रह्मणि त्रिधा ॥**

ननु सत्यत्वज्ञानत्वयोरात्मनि सिद्धत्वेऽप्यानन्त्यं न घटते ब्रह्मण्यपि तस्यासिद्धेरित्याशङ्क्य ब्रह्मणि तावत्तत्साधयति— **न व्यापित्वादिति** । 'नित्यं विभुं सर्वगतं सुसूक्ष्मं', 'आकाशवत्सर्वगतश्च नित्यः', 'नित्यो नित्यानां चेतनश्चेतनानां', 'इदं सर्वं यदयमात्मा', 'सर्वं ह्येतद्ब्रह्म', 'ब्रह्मैवेदं सर्वं' इत्यादिश्रुतिषु व्यापित्वनित्यत्वसर्वात्मत्वप्रतिपादनाद्ब्रह्मणस्त्रिविधमप्यानन्त्यं देशकालवस्तुकृतपरिच्छेदराहित्यमभ्युपेतव्यमित्यर्थः ॥ ३५ ॥

**देशकालान्यवस्तूनां कल्पितत्वाच्च मायया ।**
**न देशादिकृतोऽन्तोस्ति ब्रह्मानन्त्यं स्फुटं ततः ३६**

न केवलं श्रुतितः किंतु युक्तितोऽपीत्याह—**देशकालेति** । परिच्छेदहेतूनां देशकालान्यवस्तूनां मायया कल्पितत्वाच्च गन्धर्वनगरादिभिर्गगनस्येव न देशादिभिः कृतः पारमार्थिकः परिच्छेदो ब्रह्मणि संभवति यतोऽतो ब्रह्मण्यानन्त्यं तावद्युक्तमेव 'तदेतत्सत्यमात्मा ब्रह्मैव ब्रह्मात्मैवात्र ह्येवं न विचिकित्स्यमित्यों सत्यमात्मैव नृसिंहो देवो ब्रह्म भवति', 'अयमात्मा ब्रह्म' इत्यादिभिः श्रुतिभिरात्मनो ब्रह्माभेदप्रतिपादनात्तस्याप्यानन्त्यं सिद्धमिति तात्पर्यम् ॥ ३६ ॥

**सत्यं ज्ञानमनन्तं यद्ब्रह्म तद्वस्तु तस्य तत् ।**
**ईश्वरत्वं च जीवत्वमुपाधिद्वयकल्पितम् ॥ ३७ ॥**

ननु जडस्य जगतो ब्रह्मण्यारोपितत्वेन ब्रह्मणः परिच्छेदकत्वाभावेऽपि चेतनयोर्जीवेश्वरयोस्तदसंभवात्तत्कृतपरिच्छेदवत्त्वेन आनन्त्यं ब्रह्मणो न संगच्छत इत्याशङ्क्य तयोरप्यौपाधिकरूपत्वेन पारमार्थिकत्वाभावान्न तयोरपि वास्तवपरिच्छेदहेतुत्वमित्यभिप्रायेणाह—**सत्यमिति** । यत्सत्यादिरूपं ब्रह्म तद्वस्तु तदेव पारमार्थिकं तस्य ब्रह्मणो यल्लोकप्रसिद्धमीश्वरत्वं जीवत्वं च तद्वक्ष्यमाणोपाधिद्वयेन कल्पितं, अतः कल्पितत्वादेव जडवज्जीवेश्वरयोरपि तत्परिच्छेदकत्वाभाव इति भावः ॥ ३७ ॥

**शक्तिरस्त्यैश्वरी काचित्सर्ववस्तुनियामिका ।**
**आनन्दमयमारभ्य गूढा सर्वेषु वस्तुषु ॥ ३८ ॥**

किं तदुपाधिद्वयमित्याकाङ्क्षायां तदुभयं क्रमेण दिदर्शयिषुरादावीश्वरोपाधिभूतां शक्तिं निरूपयति—**शक्तिरिति** । ऐश्वरी ईश्वरोपाधितया ईश्वरसंबन्धिनी काचित्सदसत्त्वादिभी रूपैर्निर्वक्तुमशक्या सर्ववस्तुनियामिका सर्वेषामन्तर्यामिब्राह्मणोक्तानां पृथिव्यादीनां नियम्यवस्तूनां नियमनकर्त्री शक्तिरस्ति । सा कुत्र तिष्ठति कुतो वा नोपलभ्यत इत्याशङ्क्याह—**आनन्देति** । आनन्दमयादिषु

ब्रह्माण्डान्तेषु सर्वेषु वस्तुषु गूढा वर्तते। अतो नोपलभ्यत इत्यर्थः ॥ ३८ ॥

**वस्तुधर्मा नियम्येरञ्शक्त्या नैव यदा तदा।**
**अन्योन्यधर्मसांकर्याद्विप्लवेत जगत्खलु ॥ ३९ ॥**

नियमेनानुपलभ्यमानायास्तस्या असत्त्वमेव किं न स्यादित्याशङ्क्य जगन्नियमनान्यथानुपपत्त्या सावश्यमभ्युपेयेत्याह—**वस्तुधर्मा इति**। वस्तूनां पृथिव्यादीनां काठिन्यद्रवत्वादयो धर्मा यदा शक्त्या न व्यवस्थाप्यन्ते तदा तेषां धर्माणां सांकर्याद्विमिश्रणेनैकत्रावस्थानात् जगद्विप्लवेत। अनियतव्यवहारविषयतां प्राप्नुयादित्यर्थः। खल्विति प्रसिद्धिं द्योतयति ॥ ३९ ॥

**चिच्छायावेशतः शक्तिश्चेतनेव विभाति सा।**
**तच्छक्त्युपाधिसंयोगाद्ब्रह्मैवेश्वरतां व्रजेत् ॥ ४० ॥**

ननु जडाया अस्या जगन्नियामकत्वं न युज्यते इत्याशङ्क्याह—**चिच्छायेति**। सा शक्तिश्चिच्छायावेशतश्चिदाभासप्रवेशाच्चेतना इव चेतनत्वमापन्ना इव विभाति प्रतीयते। अतोऽस्या नियामकत्वं घटत इत्यर्थः। अस्तु, प्रस्तुते किमायातमित्यत आह—**तच्छक्तीति**। सा चासौ शक्तिश्चेति कर्मधारयः। सैवोपाधिस्तेन संयोगः संबन्धस्त-

मन्य इति त्वन्ताप्रतियोगित्वमहन्तायास्त्वमहमिति लोके प्रतिद्वन्द्वित्वेन प्रयोगदर्शनात्प्रसिद्धमिति भावः ॥ ४९ ॥

**अन्यतायाः प्रतिद्वन्द्वी स्वयं कूटस्थ इष्यताम् ।**
**त्वन्तायाः प्रतियोग्येषोऽहमित्यात्मनि कल्पितः**

भवत्वेवं लोके, प्रकृते किमायातमित्यत आह—**अन्यताया इति** । अन्यत्वप्रतियोगी स्वयंशब्दार्थः त्वन्ताप्रतियोग्यहंशब्दार्थश्चिदाभासः कूटस्थे कल्पित इत्यर्थः ॥ ५० ॥

**अहन्तास्वत्वयोर्भेदे रूप्यतेदन्तयोरिव ।**
**स्पष्टेऽपि मोहमापन्ना एकत्वं प्रतिपेदिरे ॥ ५१ ॥**

ननूक्तप्रकारेण जीवकूटस्थयोर्भेदे सत्यपि सर्वे इत्थं किमिति न जानन्तीत्याशङ्क्याह—**अहन्तेति** । बुद्धिसाक्षिणः कूटस्थस्य बुद्ध्या प्रत्यक्षीकर्तुमशक्यत्वादहमिति प्रतिभासमानयोः जीवकूटस्थयोर्भ्रान्त्यैकत्वं प्रतिपन्ना इत्यर्थः ५१

**तादात्म्याध्यास एवात्र पूर्वोक्ताविद्यया कृतः ।**
**अविद्यायां निवृत्तायां तत्कार्यं विनिवर्तते ॥ ५२ ॥**

नन्वस्य जीवकूटस्थयोरेकत्वभ्रमस्य किं कारणमित्यपेक्षायामाह—**तादात्म्येति** । अत्रास्मिन् ग्रन्थे अनादिरविवेकोऽयमित्यत्रोक्तयाऽविद्ययेत्यर्थः । यतोऽविद्याकार्यत्वमस्यातोऽविद्यानिवर्तकज्ञानेनैव तन्निवृत्तिरित्याह—**अविद्यायामिति** ॥ ५२ ॥

**अविद्यावृतितादात्म्ये विद्ययैव विनश्यतः ।**
**विक्षेपस्य स्वरूपं तु प्रारब्धक्षयमीक्षते ॥ ५३ ॥**

नन्वध्यासस्याविद्याकार्यत्वात्तन्निवृत्त्या निवृत्तिरित्येतदनुपपन्नं ब्रह्मात्मैकत्वविद्यायामुत्पन्नायामप्यविद्याकार्यस्य देहादेरुपलभ्यमानत्वादित्यत आह—**अविद्यावृतीति** । अविद्यैककारणयोरावृतितादात्म्ययोर्विद्ययैव विनिवृत्तिः, कर्मसहिताविद्याजन्यस्य तु विक्षेपस्वरूपस्य कर्मावसानपर्यन्तमवस्थानमित्यविरोध इति भावः ॥ ५३ ॥

**उपादाने विनष्टेऽपि क्षणं कार्यं प्रतीक्षते ।**
**इत्याहुस्तार्किकास्तद्वदस्माकं किं न संभवेत् ॥५४॥**

ननु प्रारब्धकर्मणो निमित्तमात्रत्वात्तत्सद्भावमात्रेणोपादाने विनष्टेऽपि कथं कार्यानुवृत्तिरित्याशङ्क्य शास्त्रान्तरसिद्धदृष्टान्तेन तदनुवृत्तिं संभावयति—**उपादान इति** ५४

**तन्तूनां दिनसंख्यानां तैस्तादृक् क्षण ईरितः ।**
**भ्रमस्यासंख्यकल्पस्य योग्यः क्षण इहेष्यताम् ५५**

ननु तार्किकैः कार्यस्य क्षणमात्रमवस्थानमङ्गीकृतं न चिरकालमित्याशङ्क्याह—**तन्तूनामिति** । संसारस्यानादिकालमारभ्यानुवृत्तत्वात्तत्संस्कारवशेन कुलालचक्रभ्रमवच्चिरकालानुवृत्तिर्न विरुध्यत इति भावः ॥ ५५ ॥

**विना क्षोदक्षमं मानं तैर्वृथा परिकल्प्यते ।**
**श्रुतियुक्त्यनुभूतिभ्यो वदतां किंनु दुःशकम् ५६**

ननु तार्किकैर्यथा युक्तमभिहितं तद्वद्भवतापीत्याशङ्क्य स्वोक्तौ ततो वैषम्यं दर्शयति—**विनेति** । क्षोदक्षमं विचारसहं मानं विना । प्रमाणमन्तरेणेत्यर्थः । 'तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये' इति श्रुतिः । चक्रभ्रमादिदृष्टान्तो युक्तिः । अनुभूतिर्विद्वदनुभवः । एतेभ्यः प्रमाणेभ्यः किं वक्तुमशक्यमित्यभिप्रायः ॥ ५६ ॥

**आस्तां दुस्तार्किकैः साकं विवादः प्रकृतं ब्रुवे ।**
**स्वाहमोः सिद्धमेकत्वं कूटस्थपरिणामिनोः ॥५७॥**

प्रकृतमनुसरति—**आस्तामिति** । स्वयमहंशब्दार्थयोः कूटस्थपरिणामिनोरेकत्वं भ्रान्त्या सिद्धम् ॥ ५७ ॥

**भ्राम्यन्ते पण्डितंमन्याः सर्वे लौकिकतैर्थिकाः ।**
**अनादृत्य श्रुतिं मौर्ख्यात्केवलां युक्तिमाश्रिताः ५८**

ननु कूटस्थजीवयोरेकत्वं भ्रान्तिसिद्धं चेदिदं भ्रान्तमिति केऽपि कुतो न जानन्तीत्याशङ्क्य श्रुतितात्पर्यपर्यालोचनशून्यत्वादित्याह—**भ्राम्यन्त इति** ॥ ५८ ॥

**पूर्वापरपरामर्शविकलास्तत्र केचन ।**
**वाक्याभासान्स्वस्वपक्षे योजयन्त्यप्यलज्जया ५९**

ननु श्रुत्यर्थप्रवक्तारोऽपि केचिदित्थं कुतो न जानन्तीत्याशङ्क्य तेषां साकल्ये श्रुत्यर्थपर्यालोचनाभावादित्याह—**पूर्वापरेति** ॥ ५९ ॥

**कूटस्थादिशरीरान्तसंघातस्यात्मतां जगुः ।**
**लोकायताः पामराश्च प्रत्यक्षाभाससमाश्रिताः ६०**

तत्र तावत्प्रत्यक्षैकप्रमाणाभ्युपगमेनातिस्थूलत्वाल्लोकायतादिपक्षं प्रथमतोऽनुभाषते—**कूटस्थादीति** । प्रत्यक्षसिद्धत्वेन देहादेरात्मत्वं पारमार्थिकं स्यादित्याशङ्क्योक्तं—**प्रत्यक्षाभासमिति** ॥ ६० ॥

**श्रौतीकर्तुं स्वपक्षं ते कोशमन्नमयं तथा ।**
**विरोचनस्य सिद्धान्तं प्रमाणं प्रतिजज्ञिरे ॥ ६१ ॥**

ते प्रत्यक्षैकप्रमाणवादिनोऽपि परव्यामोहनाय स्वमतं श्रुतिसिद्धमिति दर्शयितुं वाक्यमप्युदाहरन्तीत्याह—**श्रौतीकर्तुमिति** । कोशमन्नमयमितिशब्देन अन्नमयकोशप्रतिपादकं 'स वा एष पुरुषोऽन्नरसमयः' इत्यादिवाक्यं लक्ष्यते । विरोचनस्य सिद्धान्तमिति तत्सिद्धान्तप्रतिपादकं 'आत्मैव देहमयः' इत्यादिवाक्यं लक्ष्यते । एतद्वाक्यद्वयं प्रमाणत्वेन प्रतिजानन्त एव न तूपपादयितुं क्षमाः प्रकरणविरोधादिति भावः ॥ ६१ ॥

**जीवात्मनिर्गमे देहमरणस्यात्र दर्शनात् ।**
**देहातिरिक्त एवात्मेत्याहुर्लोकायताः परे ॥ ६२ ॥**

अस्मिन्मते दोषदर्शनपुरःसरं मतान्तरमुत्थापयति—**जीवात्मेति** ॥ ६२ ॥

**प्रत्यक्षत्वेनाभिमताहंधीर्देहातिरेकिणम् ।**
**गमयेदिन्द्रियात्मानं वच्मीत्यादिप्रयोगतः ॥६३॥**

कीदृशो देहातिरिक्त आत्मा केन वा प्रमाणेनावगम्यत इत्याशङ्कायामाह—**प्रत्यक्षत्वेनेति** । अहं वच्मि अहं पश्यामीत्यादिप्रयोगदर्शनात् देहातिरिक्ताहंबुद्धिगम्यानीन्द्रियाण्यात्मेत्यर्थः ॥ ६३ ॥

**वागादीनामिन्द्रियाणां कलहः श्रुतिषु श्रुतः ।**
**तेन चैतन्यमेतेषामात्मत्वं तत एव हि ॥ ६४ ॥**

नन्विन्द्रियाणामचेतनानां कथमात्मत्वमित्याशङ्क्य श्रुतिष्विन्द्रियसंवादश्रवणादचेतनत्वमसिद्धमित्याह—**वागादीनामिति** । चेतनत्वस्यैवात्मलक्षणत्वात् चेतनानामिन्द्रियाणां आत्मत्वमुचितमित्याह—**आत्मत्वमिति** ॥ ६४ ॥

**हैरण्यगर्भाः प्राणात्मवादिनस्त्वेवमूचिरे ।**
**चक्षुराद्यक्षलोपेऽपि प्राणसत्त्वे तु जीवति ॥६५॥**

मतान्तरमुत्थापयितुं—**हैरण्यगर्भा इति** ॥ ६५ ॥

**प्राणो जागर्ति सुप्तेऽपि प्राणश्रैष्ठ्यादिकं श्रुतम् ।**
**कोशः प्राणमयः सम्यग्विस्तरेण प्रपञ्चितः॥ ६६॥**

प्राणस्यात्मत्वे श्रौतलिङ्गानीति दर्शयति—**प्राण इति** । 'प्राणादय एवैतस्मिन् पुरे जाग्रती' त्यादिना प्राणजागरणं श्रूयते 'तत्प्राणे प्रपन्न उदतिष्ठत्तदुक्थमभवत्तदेतदुक्थम्'

इति प्राणस्य श्रैष्ठ्यादिकं श्रूयते। 'अन्योऽन्तर आत्मा प्राणमयः' इत्यादिना प्राणमयकोशः प्रपञ्चितः। आदिशब्देन प्राणसंवादप्रवेशादिकं ग्राह्यम् ॥ ६६ ॥

**मन आत्मेति मन्यन्त उपासनपरा जनाः।**
**प्राणस्याभोक्तृता स्पष्टा भोक्तृत्वं मनसस्ततः ॥६७**

प्राणादप्यान्तरस्य मनसः आत्मत्ववादिनो मतं दर्शयति—**मन आत्मेति**। प्राणस्यानात्मत्वे युक्तिमाह—**प्राणस्येति** ॥ ६७ ॥

**मन एव मनुष्याणां कारणं बन्धमोक्षयोः।**
**श्रुतो मनोमयः कोशस्तेनात्मेतीरितं मनः ॥६८॥**

मनस आत्मत्वे युक्तिप्रतिपादिकां श्रुतिमाह—**मन एवेति**। 'तस्माद्वा एतस्मात्प्राणमयादन्योऽन्तर आत्मा मनोमयः' इति श्रुत्यन्तरं दर्शयति—**श्रुत इति**। फलितमाह—**तेनेति** ॥ ६८ ॥

**विज्ञानमात्मेति पर आहुः क्षणिकवादिनः।**
**यतो विज्ञानमूलत्वं मनसो गम्यते स्फुटम् ॥६९॥**

मनसोऽप्यान्तरस्य विज्ञानस्य आत्मत्ववादिनो बौद्धस्य मतं दर्शयति—**विज्ञानमिति**। विज्ञानस्यान्तरत्वे युक्तिमाह—**य इति** ॥ ६९ ॥

**अहंवृत्तिरिदंवृत्तिरित्यन्तःकरणं द्विधा ।**
**विज्ञानं स्यादहंवृत्तिरिदंवृत्तिर्मनो भवेत् ॥ ७० ॥**

विज्ञानमनःशब्दवाच्यस्यान्तःकरणस्यैकत्वात् कथं मनोविज्ञानयोः कार्यकारणभाव इत्याशङ्क्य तमुपपादयितुं तयोर्भेदं तावद्दर्शयति—**अहंवृत्तिरिति** ॥ ७० ॥

**अहंप्रत्ययबीजत्वमिदंवृत्तेरिति स्फुटम् ।**
**अविदित्वा स्वमात्मानं बाह्यं वेत्ति न तु क्वचित्**

तयोः कार्यकारणभावमाह—**अहंप्रत्ययबीजत्वमिति** । तदेवोपपादयति—**अविदित्वेति** । अहंवृत्त्युदयाभावे इदंवृत्त्यनुदयादनयोः कार्यकारणभाव इत्यर्थः ७१

**क्षणे क्षणे जन्मनाशावहंवृत्तेर्मितौ यतः ।**
**विज्ञानं क्षणिकं तेन स्वप्रकाशं स्वतो मितेः॥७२॥**

तस्य विज्ञानस्य क्षणिकत्वेऽनुभवं प्रमाणयति—**क्षण इति** । क्षणिकत्वमुपपाद्य स्वप्रकाशत्वमुपपादयति—**स्वप्रकाशमिति** । स्वेनैव प्रमितत्वादित्यर्थः ॥ ७२ ॥

**विज्ञानमयकोशोऽयं जीव इत्यागमा जगुः ।**
**सर्वसंसार एतस्य जन्मनाशसुखादिकः ॥ ७३ ॥**

विज्ञानस्यात्मत्वे आगमः प्रमाणमित्याह—**विज्ञानमयेति** । 'तस्माद्वा एतस्मान्मनोमयादन्योऽन्तर आत्मा

विज्ञानमयः,’ ‘विज्ञानं यज्ञं तनुते’ इत्यादिवाक्यं विज्ञानस्यात्मत्वप्रतिपादकमिति भावः ॥ ७३ ॥

**विज्ञानं क्षणिकं नात्मा विद्युदभ्रनिमेषवत् ।**
**अन्यस्यानुपलब्धत्वाच्छून्यं माध्यमिका जगुः ७४**

बौद्धावान्तरभेदस्य शून्यवादिनो मतं दर्शयति—**विज्ञानमिति** ॥ ७४ ॥

**असदेवेदमित्यादाविदमेव श्रुतं ततः ।**
**ज्ञानज्ञेयात्मकं सर्वं जगद्भ्रान्तिप्रकल्पितम् ॥ ७५ ॥**

तत्र श्रुतिमाह—**असदेवेदमितीति** । शून्यस्यैव तद्रूपत्वे प्रतीयमानस्य जगतः का गतिरित्यत आह—**ज्ञानेति** ॥

**निरधिष्ठानविभ्रान्तेरभावादात्मनोऽस्तिता ।**
**शून्यस्यापि ससाक्षित्वादन्यथा नोक्तिरस्य ते ७६**

तदेतन्मतं दूषयति—**निरधिष्ठानेति** । निःस्वरूपस्य शून्यस्याधिष्ठानत्वायोगान्निरधिष्ठानस्य भ्रमस्यानुपपत्तेर्जगत्कल्पनाधिष्ठानस्यात्मनः सत्ताभ्युपगन्तव्या । किंच शून्यवादिनोऽपि शून्यसाक्षित्वेनावश्यमात्माभ्युपगन्तव्यः । अन्यथा तस्यानभ्युपगमे अस्य शून्यस्योक्तिः शून्यमित्यभिधानं ते बौद्धस्य तव मते न सिध्येदिति भावः ॥ ७६ ॥

**अन्यो विज्ञानमयत आनन्दमय आन्तरः ।**
**अस्तीत्येवोपलब्धव्य इति वैदिकदर्शनम् ॥ ७७ ॥**

कस्तर्ह्यात्मेत्यत आह—**अन्य इति** । ‘तस्माद्वा एत-

स्माद्विज्ञानमयादन्योऽन्तर आत्मानन्दमयः', 'अस्तीत्येवोपलब्धव्यस्तत्त्वभावेन' इति च श्रुतिसद्भावादानन्दमय आत्माभ्युपगन्तव्य इति वैदिकदर्शनं वैदिकसिद्धान्तः ॥७७॥

**अणुर्महान्मध्यमो वेत्येवं तत्रापि वादिनः ।**
**बहुधा विवदन्ते हि श्रुतियुक्तिसमाश्रयात् ॥७८॥**

एवमात्मस्वरूपे विप्रतिपत्तिं प्रदर्श्य तत्परिमाणविशेषेऽपि वादिविप्रतिपत्तिं दर्शयति—**अणुरिति** ॥ ७८ ॥

**अणुं वदन्त्यान्तरालाः सूक्ष्मनाडीप्रचारतः ।**
**रोम्णः सहस्रभागेन तुल्यासु प्रचरत्ययम् ॥७९॥**

अत्राणुत्ववादिनस्तावद्दर्शयति—**अणुमिति** । अणुत्वाभिधाने हेतुमाह—**सूक्ष्मेति** । तदुपपादयति—**रोम्ण इति** । नाडीष्विति शेषः । सूक्ष्मासु नाडीषु संचारोऽणुत्वमन्तरेण न घटत इत्यभिप्रायः ॥ ७९ ॥

**अणोरणीयानेषोऽणुः सूक्ष्मात्सूक्ष्मतरं त्विति ।**
**अणुत्वमाहुः श्रुतयः शतशोऽथ सहस्रशः ॥८०॥**

अणुत्वे किं प्रमाणमित्यत आह—**अणोरिति** । 'अणोरणीयान्महतो महीयान्', 'एषोऽणुरात्मा चेतसा वेदितव्यः,' 'सूक्ष्मात्सूक्ष्मतरं नित्यम्' इत्यादि श्रुतय इत्यर्थः ॥ ८० ॥

**वालाग्रशतभागस्य शतधा कल्पितस्य च ।**
**भागो जीवः स विज्ञेय इति चाहाऽपरा श्रुतिः८१**

श्रुत्यन्तरमुदाहरति—**वालाग्रेति** ॥ ८१ ॥

**दिगम्बरा मध्यमत्वमाहुरापादमस्तकम् ।**
**चैतन्यव्याप्तिसंदृष्टेरानखाग्रश्रुतेरपि ॥ ८२ ॥**

मध्यमपरिमाणवादिनो मतं दर्शयति—**दिगम्बरा इति** । तत्रोपपत्तिमाह—**आपादेति** । 'स एष इह प्रविष्ट आनखाग्रेभ्यः' इति श्रुतिरप्यत्र प्रमाणमित्याह—**आनखाग्रेति** ॥ ८२ ॥

**सूक्ष्मनाडीप्रचारस्तु सूक्ष्मैरवयवैर्भवेत् ।**
**स्थूलदेहस्य हस्ताभ्यां कञ्चुकप्रतिमोकवत् ॥८३॥**

ननु मध्यमपरिमाणत्वे श्रुतिसिद्धो नाडीप्रचारो न घटते इत्याशङ्क्याह—**सूक्ष्मनाडीति** । यथा देहावयवयोर्हस्तयोः कञ्चुकप्रवेशेन देहस्य कञ्चुकप्रवेशस्तद्वदात्मावयवानां सूक्ष्माणां नाडीषु प्रचारेणात्मनोऽपि प्रचार उपचर्यत इत्यर्थः ॥ ८३ ॥

**न्यूनाधिकशरीरेषु प्रवेशोऽपि गमागमैः ।**
**आत्मांशानां भवेत्तेन मध्यमत्वं विनिश्चितम्॥८४**

नन्वात्मनो नियतमध्यमपरिमाणत्वे कर्मवशान्न्यूनाधिकशरीरप्रवेशो न घटत इत्याशङ्क्यावयवागमापायाभ्यामात्मनो नियतमध्यमपरिमाणत्वाद्देहवदुभयं न विरुध्यत इत्याह—**न्यूनाधिकेति** । फलतिमाह—**तेनेति** ॥८४॥

**सांशस्य घटवन्नाशो भवत्येव तथा सति।**
**कृतनाशाऽकृताभ्यागमयोः को वारको भवेत् ॥८५**

आत्मनः सावयवत्वे घटादिवदनित्यत्वप्रसङ्गेनैतद्दूषयति—**सांशस्येति**। भवतु को दोषस्तत्राह—**तथा सतीति**। कृतयोः पुण्यपापयोर्भोगमन्तरेण नाशः कृतनाशः, अकृतयोरकस्मात्फलदातृत्वमकृताभ्यागमः, एतद्दोषद्वयमात्मनोऽनित्यत्वाभ्युपगमे भवेदिति भावः ॥ ८५ ॥

**तस्मादात्मा महानेव नैवाणुर्नापि मध्यमः।**
**आकाशवत्सर्वगतो निरंशः श्रुतिसंमतः ॥ ८६ ॥**

अतः परिशेषादात्मनो विभुत्वं सिद्धमित्याह—**तस्मादिति**। तत्र प्रमाणमाह—**आकाशवदिति**। 'आकाशवत्सर्वगतश्च नित्यः', 'निष्कलं निष्क्रियं' इत्याद्यागमः प्रमाणमित्यर्थः ॥ ८६ ॥

**इत्युक्त्वा तद्विशेषे तु बहुधा कलहं ययुः।**
**अचिद्रूपोऽथ चिद्रूपश्चिदचिद्रूप इत्यपि ॥ ८७ ॥**

एवमात्मनो विभुत्वं प्रसाध्य तस्य चिद्रूपं निश्चेतुं तावद्वादिविप्रतिपत्तिं दर्शयति—**इत्युक्त्वेति** ॥ ८७ ॥

**प्राभाकरास्तार्किकाश्च प्राहुरस्याचिदात्मताम्।**
**आकाशवद्द्रव्यमात्मा शब्दवत्तद्गुणश्चितिः ॥८८॥**

अचिद्रूपत्ववादिनो मतं दर्शयति—**प्राभाकरा इति**।

तत्प्रक्रियामनुभाषते—**आकाशवद्द्रव्यमिति** । आत्मा द्रव्यं भवितुमर्हति गुणवत्त्वादाकाशवदिति अनुमानं सूचितं आत्मनः पृथिव्यादिभ्यो भेदसाधकं विशेषगुणं दर्शयति—**शब्दवदिति** । आत्मा पृथिव्यादिभ्यो भिद्यते ज्ञानगुणत्वात् यत्पृथिव्यादिभ्यो न भिद्यते तत् ज्ञानगुणकमपि न भवति यथा पृथिव्यादीत्यनुमानं द्रष्टव्यम् ॥ ८८ ॥

**इच्छाद्वेषप्रयत्नाश्च धर्माधर्मौ सुखासुखे ।**
**तत्संस्काराश्च तस्यैते गुणाश्चितिवदीरिताः ८९**

तस्यैव विशेषगुणान्तराण्याह—**इच्छेति** । तत्संस्काराः भावनाः ॥ ८९ ॥

**आत्मनो मनसा योगे स्वादृष्टवशतो गुणाः ।**
**जायन्तेऽथ प्रलीयन्ते सुषुप्तेऽदृष्टसंक्षयात् ॥९०॥**

एषां गुणानामुत्पत्तिविनाशकारणमाह—**आत्मन इति** । स्वादृष्टवशात आत्मनो मनसा योगे इत्यन्वयः ॥ ९० ॥

**चितिमत्त्वाच्चेतनोऽयमिच्छाद्वेषप्रयत्नवान् ।**
**स्याद्धर्माधर्मयोः कर्ता भोक्ता दुःखादिमत्त्वतः ॥**

आत्मनोऽचिद्रूपत्वे कथं चेतनत्वाभ्युपगम इत्याशङ्क्य चितिमत्त्वादित्याह—**चितिमत्त्वादिति** । आत्मनश्चेतनत्वे हेत्वन्तरमाह—**इच्छेति** । तस्येश्वराद्वैलक्षण्यमाह—**स्यादिति** ॥ ९१ ॥

**यथात्र कर्मवशतः कादाचित्कं सुखादिकम् ।**
**तथा लोकान्तरे देहे कर्मणेच्छादि जन्यते ॥९२॥**

नन्वात्मनो विभुत्वे लोकान्तरगमनादिकं कथं घटेतेत्याशङ्क्यास्मिन् देहे कर्मवशादिच्छाद्युत्पत्तौ सत्यामत्रात्मनोऽवस्थानादिव्यवहार इव कर्मवशाल्लोकान्तरे देहान्तरोत्पत्तौ तदवच्छिन्नात्मप्रदेशे सुखाद्युत्पत्तिवशात्तत्रात्मनो गमनादिकव्यवहार इत्यौपचारिकमात्मनो गमनादिकमित्यभिप्रेत्याह—**यथात्र कर्मवशत इति** ॥ ९२ ॥

**एवं च सर्वगस्यापि संभवेतां गमागमौ ।**
**कर्मकाण्डः समग्रोऽत्र प्रमाणमिति तेऽवदन् ९३**

**एवमिति** । आत्मनः कर्तृत्वादिधर्मवत्त्वे किं प्रमाणमित्यत आह—**कर्मकाण्ड इति** ॥ ९३ ॥

**आनन्दमयकोशो यः सुषुप्तौ परिशिष्यते ।**
**अस्पष्टचित्स आत्मैषां पूर्वकोशोऽस्य ते गुणाः९४**

ननु 'अन्यो विज्ञानमयात् आनन्दमय आन्तरः' इत्यत्रानन्दमयस्यात्मत्वमुक्तम्, इदानीमिच्छादिमानन्यः प्रतिपाद्यतेऽतः पूर्वोत्तरविरोध इत्याशङ्क्याह—**आनन्दमयेति** । सुषुप्तावस्पष्टचिद्य आनन्दमयकोशः परिशिष्यते स पूर्वकोशः श्रौतेषु पञ्चकोशेषु प्रथम एषां प्राभाकरादीनामात्मा । अस्यात्मनस्ते पूर्वोक्ताः ज्ञानानन्दादयो गुणा इत्यर्थः ॥ ९४ ॥

**गूढं चैतन्यमुत्प्रेक्ष्य जडबोधस्वरूपताम् ।**
**आत्मनो ब्रुवते भाट्टाश्चिदुत्प्रेक्षोत्थितस्मृतेः ॥९५**

अस्यैवात्मनश्चिदचिद्रूपत्वं भाट्टा वर्णयन्तीत्याह—**गूढ-मिति** । आत्मनो गूढमस्पष्टं चैतन्यमुत्प्रेक्ष्य ऊहित्वा चिज्जडोभयात्मकतां वर्णयन्ति । चैतन्योत्प्रेक्षायां कारण-माह—**चिदुत्प्रेक्षेति** । उत्थितस्मृतेश्चिदुत्प्रेक्षा भवतीति योजना । सुप्तेरुत्थितस्य जायमानात्स्मरणात्सौषुप्तचैतन्य-स्योत्प्रेक्षा भवतीत्यर्थः ॥ ९५ ॥

**जडो भूत्वा तदाऽस्वाप्समिति जाड्यस्मृतिस्तदा**
**विना जाड्यानुभूतिं न कथंचिदुपपद्यते ॥ ९६ ॥**

चिदुत्प्रेक्षाप्रकारमेव स्पष्टयति—**जडो भूत्वेति** । तदा सुषुप्तिकाले जडो भूत्वाऽस्वाप्समित्येवंरूपा जाड्य-स्मृतिरुत्थितस्य पुरुषस्य जायमाना सुषुप्तिकालीनजाड्यानु-भवमन्तरेण अनुपपद्यमानं तदानींतनजाड्यानुभवं कल्प-यतीति भावः ॥ ९६ ॥

**द्रष्टुर्दृष्टेरलोपश्च श्रुतः सुप्तौ ततस्त्वयम् ।**
**अप्रकाशप्रकाशाभ्यामात्मा खद्योतवद्युतः ॥९७॥**

सुषुप्तौ चैतन्यलोपाभावे प्रमाणमाह—**द्रष्टुरिति** । 'नहि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वात्' इति श्रुतौ द्रष्टुरात्मनः स्वरूपभूताया दृष्टेर्लोपो न विद्यते, अविना-

शरहितस्वभावत्वात् । अन्यथा लोपवादिनोऽपि निःसाक्षिकस्य वक्तुमशक्यत्वात्सुषुप्तौ चैतन्यलोपाभावः श्रूयते । ततोऽपि कारणादयमात्मा खद्योतवदस्फुरणस्फुरणाभ्यां युक्तो भवतीत्यर्थः ॥ ९७ ॥

**निरंशस्योभयात्मत्वं न कथंचिद्धटिष्यते ।**
**तेन चिद्रूप एवात्मेत्याहुः सांख्यविवेकिनः ॥९८॥**

अस्मिन् भाट्टमते दूषणाभिधानपुरःसरं सांख्यमतमुत्थापयति—**निरंशस्येति** ॥ ९८ ॥

**जाड्यांशः प्रकृते रूपं विकारि त्रिगुणं च तत् ।**
**चितो भोगापवर्गार्थं प्रकृतिः सा प्रवर्तते ॥ ९९ ॥**

जाड्यस्मृतेस्तर्हि का गतिरित्याशङ्क्याह—**जाड्यांश इति** । तत् प्रकृतिरूपं सत्त्वरजस्तमोगुणात्मकम् । प्रकृतिकल्पनायां प्रयोजनमाह—**चित इति** । चितः पुरुषस्येति यावत् ॥ ९९ ॥

**असङ्गायाश्चितेर्बन्धमोक्षौ भेदाग्रहान्मतौ ।**
**बन्धमुक्तिव्यवस्थार्थं पूर्वेषामिव चिद्भिदा ॥१००॥**

ननु चितोऽसङ्गत्वेन प्रकृतिपुरुषयोरत्यन्तविविक्तत्वात् प्रकृतिप्रवृत्त्या कथं पुरुषस्य भोगापवर्गावित्याशङ्क्य तयोर्विवेकस्याग्रहणात्पुरुषे भोगापवर्गौ व्यवह्रियेते इत्याह—**असङ्गाया इति** । तार्किकादिभिरिव सांख्यैरात्मभेदोऽङ्गीक्रियत इत्याह—**बन्धमुक्तीति** ॥ १०० ॥

**महतः परमव्यक्तमिति प्रकृतिरुच्यते ।**
**श्रुतावसङ्गता तद्वदसङ्गो हीत्यतः स्फुटा ॥ १ ॥**

प्रकृतिसद्भावे पुरुषस्यासङ्गत्वे च श्रुतिमुदाहरति—**महत इति** ॥ १ ॥

**चित्संनिधौ प्रवृत्तायाः प्रकृतेर्हि नियामकम् ।**
**ईश्वरं ब्रुवते योगाः स जीवेभ्यः परः श्रुतः ॥ २ ॥**

एवं जीवविषयां वादिविप्रतिपत्तिं प्रदर्श्येश्वरविषयां तां प्रदर्शयितुं ईश्वररूपं तावत्स्थापयति—**चित्संनिधाविति** । ननु प्रकृतिपुरुषातिरिक्तेश्वरकल्पनमप्रमाणमित्याशङ्क्याह—**स जीवेभ्य इति** ॥ २ ॥

**प्रधानक्षेत्रज्ञपतिर्गुणेश इति हि श्रुतिः ।**
**आरण्यकेऽसंभ्रमेण ह्यन्तर्याम्युपपादितः ॥ ३ ॥**

तामेवेश्वरसद्भावप्रतिपादिकां श्रुतिं पठति—**प्रधानेति** । प्रधानं गुणसाम्यावस्थारूपं, क्षेत्रज्ञा जीवास्तेषां पतिः, गुणाः सत्त्वादयस्तेषामीशो नियामक इत्यर्थः । न केवलमियमेव श्रुतिरीश्वरप्रतिपादिका अन्तर्यामिब्राह्मणमपीत्याह—**आरण्यक इति** ॥ ३ ॥

**अत्रापि कलहायन्ते वादिनः स्वस्वयुक्तिभिः ।**
**वाक्यान्यपि यथाप्रज्ञं दार्ढ्यायोदाहरन्ति हि ॥४॥**

तामेव वादिविप्रतिपत्तिं प्रतिजानीते—**अत्रापीति** । प्रज्ञामनतिक्रम्य यथाप्रज्ञम् ॥ ४ ॥

**क्लेशकर्मविपाकैस्तदाशयैरप्यसंयुतः ।**
**पुंविशेषो भवेदीशो जीववत्सोऽप्यसङ्गचित् ॥५॥**

इदानीं पतञ्जलिनोक्तमीश्वरप्रतिपादकं 'क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः' इत्येतत्सूत्रमर्थतः पठति—**क्लेशेति** । क्लेशा अविद्यादयः पञ्च, कर्माणि 'कर्माशुक्लाकृष्णं योगिनस्त्रिविधमितरेषाम्' इति सूत्रितानि, सति मूले तद्विपाका जात्यायुर्भोगा इत्युक्ताः कर्मविपाकाः फलविशेषास्तदाशयास्तेषां संस्कारास्तैः क्लेशादिभिरसंस्पृष्टः पुरुषविशेष ईश्वरो भवति सोऽपि जीववदसङ्गश्चिद्रूपश्चेत्यर्थः ॥ ५ ॥

**तथापि पुंविशेषत्वाद्धटतेऽस्य नियन्तृता ।**
**अव्यवस्थौ बन्धमोक्षावापतेतामिहान्यथा ॥ ६ ॥**

नन्वसङ्गचिद्रूपत्वे कथं नियन्तृत्वमित्यत आह—**तथापीति** । ईश्वरस्य नियन्तृत्वानभ्युपगमे दोषमाह—**अव्यवस्थाविति** ॥ ६ ॥

**भीषास्मादित्येवमादावसङ्गस्य परात्मनः ।**
**श्रुतं तद्युक्तमप्यस्य क्लेशकर्माद्यसंगमात् ॥ ७ ॥**

असङ्गस्येश्वरस्य नियन्तृत्वं निष्प्रमाणकमित्याशङ्क्याह—**भीषेति** । तन्नियन्तृत्वं श्रुतम् । ननु श्रुतमप्ययुक्तं कथमङ्गीक्रियत इत्यत आह—**युक्तमपीति** । जीवधर्मस्य क्लेशादेरभावादुपपन्नं चेत्यर्थः ॥ ७ ॥

**जीवानामप्यसङ्गत्वात्क्लेशादिर्न ह्यथापि च ।**
**विवेकाग्रहतः क्लेशकर्मादि प्रागुदीरितम् ॥ ८ ॥**

ननु जीवा अप्यसङ्गचिद्रूपाः क्लेशादिरहिता एव, तथाचेश्वरे को विशेष इत्याशङ्क्य जीवानां स्वतः क्लेशादिरहितत्वेऽपि बुद्ध्या सह विवेकाग्रहात्क्लेशादिरस्तीति पूर्वोक्तं स्मारयति—**जीवानामिति** ॥ ८ ॥

**नित्यज्ञानप्रयत्नेच्छा गुणानीशस्य मन्वते ।**
**असङ्गस्य नियन्तृत्वमयुक्तमिति तार्किकाः ॥ ९ ॥**

तार्किकास्त्वसङ्गस्य नियामकत्वमसहमाना जीवविलक्षणत्वाय ज्ञानादिगुणत्रयं नित्यमङ्गीकुर्वत इत्याह—**नित्येति** ९

**पुंविशेषत्वमप्यस्य गुणैरेव न चान्यथा ।**
**सत्यकामः सत्यसंकल्प इत्यादि श्रुतिर्जगौ ॥१०॥**

नन्विच्छादिगुणकस्य तस्य कथं जीवाद्वैलक्षण्यमित्याशङ्क्य गुणानां नित्यत्वादेवेति परिहरति—**पुंविशेषत्वमिति** । गुणानां नित्यत्वे प्रमाणमाह—**सत्येति**॥ १० ॥

**नित्यज्ञानादिमत्त्वेऽस्य सृष्टिरेव सदा भवेत् ।**
**हिरण्यगर्भ ईशोऽतो लिङ्गदेहेन संयुतः ॥ ११ ॥**

तत्रापि दोषसद्भावात्पक्षान्तरमाह—**नित्येति** । अस्य हिरण्यगर्भस्य । किं रूपमित्यत आह—**लिङ्गदेहेनेति** । मायोपाधिकः परमात्मा लिङ्गशरीरसमष्ट्यभिमानेन हिरण्यगर्भ इत्युच्यत इत्यर्थः ॥ ११ ॥

**उद्गीथब्राह्मणे तस्य माहात्म्यमतिविस्तृतम् ।**
**लिङ्गसत्त्वेऽपि जीवत्वं नास्य कर्माद्यभावतः १२**

हिरण्यगर्भस्येश्वरत्वे किं प्रमाणमित्यत आह—**उद्गीथेति** । ननु लिङ्गशरीरयोगे जीवः स्यादित्याशङ्क्य अविद्याकामकर्माभावान्न जीव इत्याह—**लिङ्गसत्त्वेऽपीति** १२

**स्थूलदेहं विना लिङ्गदेहो न क्वापि दृश्यते ।**
**वैराजो देह ईशोऽतः सर्वतो मस्तकादिमान् १३**

केवलं लिङ्गशरीरस्य स्थूलदेहं विहायानुपलभ्यमानत्वात्स्थूलशरीरसमष्ट्यभिमानी विराडेवेश्वर इत्याह—**स्थूलदेहं विनेति** ॥ १३ ॥

**सहस्रशीर्षेत्येवं च विश्वतश्चक्षुरित्यपि ।**
**श्रुतमित्याहुरनिशं विश्वरूपस्य चिन्तकाः ॥ १४ ॥**

तत्सद्भावे प्रमाणमाह—**सहस्रशीर्षेतीति** । श्रुतं वाक्यमिति शेषः । विश्वरूपस्य चिन्तकाः विराडुपासकाः ॥१४॥

**सर्वतः पाणिपादत्वे कृम्यादेरपि चेशता ।**
**ततश्चतुर्मुखो देव एवेशो नेतरः पुमान् ॥ १५ ॥**

अत्रापि दोषदृष्ट्या देवतान्तरमालम्बत इत्याह—**सर्वत इति** ॥ १५ ॥

**पुत्रार्थं तमुपासीना एवमाहुः प्रजापतिः ।**
**प्रजा असृजतेत्यादिश्रुतिं चोदाहरन्त्यमी ॥ १६ ॥**

एवं कैरुच्यत इत्यत आह—**पुत्रार्थमिति** । 'प्रजापतिः प्रजा असृजत' इत्यादिवाक्यं तत्र प्रमाणमाहुरित्याह—**प्रजापतिरिति** ॥ १६ ॥

**विष्णोर्नाभेः समुद्भूतो वेधाः कमलजस्ततः ।**
**विष्णुरेवेश इत्याहुर्लोके भागवता जनाः ॥ १७ ॥**

भागवतमतमाह—**विष्णोरिति** ॥ १७ ॥

**शिवस्य पादावन्वेष्टुं शार्ङ्ग्यशक्तस्ततः शिवः ।**
**ईशो न विष्णुरित्याहुः शैवा आगममानिनः ॥१८॥**

शैवानां मतमाह—**शिवस्येति** ॥ १८ ॥

**पुरत्रयं साधयितुं विघ्नेशं सोऽप्यपूजयत् ।**
**विनायकं प्राहुरीशं गाणपत्यमते रताः ॥ १९ ॥**

गाणपत्यमतमाह—**पुरत्रयमिति** ॥ १९ ॥

**एवमन्ये स्वस्वपक्षाभिमानेनान्यथान्यथा ।**
**मन्त्रार्थवादकल्पादीनाश्रित्य प्रतिपेदिरे ॥ १२० ॥**

उक्तन्यायमन्यत्राप्यतिदिशति—**एवमिति** । अन्ये भैरवमैरालाद्युपासकाः । अन्यथान्यथावर्णने कारणमाह—**स्वस्वेति** । तत्र तत्र प्रमाणानि सन्तीति दर्शयति—**मन्त्रेति** ॥ १२० ॥

**अन्तर्यामिणमारभ्य स्थावरान्तेशवादिनः ।**
**सन्त्यश्वत्थार्कवंशादेः कुलदैवतदर्शनात् ॥ २१ ॥**

एवं कति मतानीत्याशङ्क्य असंख्यानीत्याह—**अन्तर्यामिणमिति**। स्थावरेशवादो न क्वापि दृष्टचर इत्याशङ्क्याह—**अश्वत्थार्केति** ॥ २१ ॥

**तत्त्वनिश्चयकामेन न्यायागमविचारिणाम् ।**
**एकैव प्रतिपत्तिः स्यात्साप्यत्र स्फुटमुच्यते ॥२२॥**

नन्वेवं मतभेदे कस्योपादेयत्वं कस्य वा हेयत्वमित्याकाङ्क्षायामाह—**तत्त्वनिश्चयेति** । तत्त्वनिश्चयकामेन तत्त्वनिश्चयेच्छया न्यायागमयोर्विचारणशीलानां पुरुषाणां प्रतिपत्तिरेकैव स्यात्। सा कीदृशीत्यत आह—**साप्यत्रेति** ॥ २२ ॥

**मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् ।**
**अस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत् ॥ २३ ॥**

तामेव प्रतिपत्तिं दर्शयितुं तदनुकूलां श्रुतिं पठति—**मायां त्विति** । मायामेव प्रकृतिं जगदुपादानकारणं विद्यात् जानीयात्। मायिनं तु मायोपाधिकमन्तर्यामिणमेव महेश्वरं मायाधिष्ठातारं निमित्तकारणं जानीयात्। अस्य मायिनो महेश्वरस्याऽवयवभूतैरंशरूपैश्चरात्मकैर्जीवैः कृत्स्नमिदं जगद्व्याप्तमित्यस्याः श्रुतेरर्थः ॥ २३ ॥

**इति श्रुत्यनुसारेण न्यायो निर्णय ईश्वरे ।**
**तथा सत्यविरोधः स्यात्स्थावरान्तेशवादिनाम् २४**

एतच्छ्रुत्यनुसारेणेश्वरविषयो निर्णयो युक्त इत्याह—**इतीति**। कुतो युक्त इत्याशङ्क्य सर्वत्राविरुद्धत्वादित्याह—**तथेति**। सर्वस्यापीश्वरत्वाभ्युपगमान्न केनापि विरोध इति भावः ॥ २४ ॥

**माया चेयं तमोरूपा तापनीये तदीरणात्।**
**अनुभूतिं तत्र मानं प्रतिजज्ञे श्रुतिः स्वयम् ॥२५॥**

ननु जगत्प्रकृतिभूताया मायायाः किं रूपमित्यत आह—**माया चेयमिति**। कुत इत्यत आह—**तापनीय इति**। माया च तमोरूपेति तापनीयोपनिषदि तमोरूपत्वस्याभिधानादित्यर्थः। मायायास्तमोरूपत्वे किं प्रमाणमित्याकाङ्क्षायां अनुभूतेरिति श्रुतिरेवात्रानुभवः प्रमाणमिति प्रतिजानीत इत्याह—**अनुभूतिमिति** ॥ २५ ॥

**जडं मोहात्मकं तच्चेत्यनुभावयति श्रुतिः।**
**आबालगोपं स्पष्टत्वादानन्त्यं तस्य साब्रवीत् २६**

तत्र मायायास्तमोरूपत्वे कोऽसावनुभव इत्याकाङ्क्षायां तदेतज्जडं मोहात्मकमिति श्रुतिरेवात्रानुभवं स्पष्टयतीत्याह—**जडमिति**। अनन्तमिति श्रुत्या सर्वानुभवसिद्धत्वमुच्यत इत्याह—**आबालेति**। जडं मोहं च प्रकृतेः कार्यमिति आबालगोपालादीनां सर्वेषामनुभव इत्यर्थः २६

**अचिदात्मघटादीनां यत्स्वरूपं जडं हि तत्।**
**यत्र कुण्ठीभवेद्बुद्धिः स मोह इति लौकिकाः २७**

जडशब्दस्यार्थमाह—**अचिदात्मेति** । मोहशब्दार्थमाह—**यत्रेति** ॥ २७ ॥

**इत्थं लौकिकदृष्ट्यैतत्सर्वैरप्यनुभूयते ।**
**युक्तिदृष्ट्या त्वनिर्वाच्यं नासदासीदिति श्रुतेः २८**

उक्तप्रकारेण सर्वानुभवसिद्धत्वलक्षणमानन्त्यं सिद्धमित्याह—**इत्थमिति** । एतज्जाड्यमोहलक्षणतमोरूपत्वम् । नन्वेवं मायायाः सर्वानुभवसिद्धत्वे घटादिवत् ज्ञानेनानिवर्त्यत्वं स्यादित्याशङ्क्याह—**युक्तीति** । तुशब्दः शङ्काव्यावृत्त्यर्थः । अनिर्वाच्यं सत्त्वेनासत्त्वेन वा निर्वक्तुमशक्यम् । तत्र किं प्रमाणमित्यत आह—**नासदिति** ॥ २८ ॥

**नासदासीद्विभातत्वान्नो सदासीच्च बाधनात् ।**
**विद्यादृष्ट्या श्रुतं तुच्छं तस्य नित्यनिवृत्तितः २९**

अस्याः श्रुतेरभिप्रायमाह—**नासदासीदिति** । बाधनात्, 'नेह नानास्ति किंचन' इति श्रुत्या निषेधादित्यर्थः । सदसद्रूपत्वं तु विरुद्धत्वादयुक्तमिति श्रुत्योपेक्षितम् । एवं युक्तिदृष्ट्याऽनिर्वचनीयत्वं प्रदर्श्य 'तुच्छमिदं रूपमस्य' इति श्रुतिर्विद्वदनुभवेन तस्यास्तुच्छत्वं दर्शयतीत्याह—**विद्येति** । तुच्छत्वे हेतुमाह—**तस्येति** ॥ २९ ॥

**तुच्छाऽनिर्वचनीया च वास्तवी चेत्यसौ त्रिधा ।**
**ज्ञेया माया त्रिभिर्बोधैः श्रौतयौक्तिकलौकिकैः १३०**

उपपादितमुपसंहरति—**तुच्छेति**। श्रौतबोधेन तुच्छा कालत्रयेऽप्यसती, यौक्तिकबोधेनानिर्वचनीया, लौकिकबोधेन वास्तवी चेत्येवं त्रिधा माया ज्ञेयेत्यर्थः ॥ १३० ॥

**अस्य सत्त्वमसत्त्वं च जगतो दर्शयत्यसौ ।**
**प्रसारणाच्च संकोचाद्यथा चित्रपटस्तथा ॥ ३१ ॥**

'अस्य सत्त्वमसत्त्वं च दर्शयती'ति श्रुतेरर्थः । अस्याः कृत्यमाह—**अस्येति**। एकस्या एव मायाया जगत्सत्त्वासत्त्वप्रदर्शकत्वे दृष्टान्तमाह—**प्रसारणादिति** ॥ ३१ ॥

**अस्वतन्त्रा हि माया स्यादप्रतीतेर्विना चितिम् ।**
**स्वतन्त्रापि तथैव स्यादसङ्गस्यान्यथाकृतेः ॥ ३२ ॥**

स्वतन्त्रास्वतन्त्रत्वेनेति श्रुत्या मायायाः स्वातन्त्र्यास्वातन्त्र्ये दर्शिते तत्रोभयत्रोपपत्तिमाह—**अस्वतन्त्रेति**। स्वभासकचैतन्यं विहाय न प्रकाशते इति अस्वतन्त्रासङ्गस्यात्मनोऽन्यथाकरणात्स्वतन्त्रापीत्यर्थः ॥ ३२ ॥

**कूटस्थासङ्गमात्मानं जगत्त्वेन करोति सा ।**
**चिदाभासस्वरूपेण जीवेशावपि निर्ममे ॥ ३३ ॥**

अन्यथाकरणमेव स्पष्टयति—**कूटस्थासङ्गमिति**। 'जीवेशावाभासेन करोती'ति श्रुत्युक्तं जीवेश्वरविभागं च करोतीत्याह—**चिदाभासेति** ॥ ३३ ॥

**कूटस्थमनुपद्रुत्य करोति जगदादिकम् ।**
**दुर्घटैकविधायिन्यां मायायां का चमत्कृतिः॥३४॥**

नन्वात्मनोऽन्यथाकरणे कूटस्थत्वहानिः स्यादित्याशङ्क्याह—**कूटस्थमिति**। ननु कूटस्थत्वाविघातेन जगदादिस्वरूपत्वापादनं दुर्घटमित्याशङ्क्य मायायां दुर्घटैकविधायित्वान्नेदमाश्चर्यकारणमित्याह—**दुर्घटेति**। अन्यथा मायात्वमेव भज्येतेति भावः ॥ ३४ ॥

**द्रवत्वमुदके वह्नावौष्ण्यं काठिन्यमश्मनि।**
**मायाया दुर्घटत्वं च स्वतः सिध्यति नान्यतः ३५**

मायाया दुर्घटकारित्वस्वभावत्वे दृष्टान्तमाह—**द्रवत्वमिति**। उदकादीनां द्रवत्वादि यथा स्वाभाविकं तद्वन्मायाया दुर्घटकारित्वमित्यर्थः ॥ ३५ ॥

**न वेत्ति लोको यावत्तां साक्षात्तावच्चमत्कृतिम्।**
**धत्ते मनसि पश्चात्तु मायैषेत्युपशाम्यति ॥ ३६ ॥**

ननु मायाया दुर्घटकारित्वमाश्चर्यकारणं न भवतीत्युक्तमनुपपन्नं, लोके मायायाश्चमत्कारहेतुत्वदर्शनादित्याशङ्क्य मायायाः प्रयोक्तृसाक्षात्कारपर्यन्तमेवास्या आश्चर्यकारणत्वं नोपरिष्टादित्याह—**न वेत्तीति** ॥ ३६ ॥

**प्रसरन्ति हि चोद्यानि जगद्वस्तुत्ववादिषु।**
**न चोदनीयं मायायां तस्याश्चोद्यैकरूपतः ॥ ३७ ॥**

किंच जगत्सत्यत्ववादिनो नैयायिकादीन्प्रत्येवंविधानि चोद्यानि कर्तव्यानि न मायावादिनं प्रतीत्याह—**प्रसरन्तीति** ॥ ३७ ॥

**चोद्येऽपि यदि चोद्यं स्यात्त्वच्चोद्ये चोद्यते मया ।**
**परिहार्यं ततश्चोद्यं न पुनः प्रतिचोद्यताम् ॥ ३८॥**

मायावादिनं प्रति चोद्यकरणेऽतिप्रसङ्गमाह—**चोद्येऽपीति** । तर्हि किं कर्तव्यमित्यत आह—**परिहार्यमिति** ॥ ३८ ॥

**विस्मयैकशरीराया मायायाश्चोद्यरूपतः ।**
**अन्वेष्यः परिहारोऽस्या बुद्धिमद्भिः प्रयत्नतः ३९**

उक्तमेवार्थं प्रपञ्चयति—**विस्मयेति** ॥ ३९ ॥

**मायात्वमेव निश्चेयमिति चेत्तर्हि निश्चिनु ।**
**लोकप्रसिद्धमायाया लक्षणं यत्तदीक्ष्यताम्॥१४०॥**

मायात्वनिश्चये तत्परिहारान्वेषणमुचितं स एव नेदानीं सिद्ध इति शङ्कते—**मायात्वमिति** । मायालक्षणसद्भावान्मायात्वं निश्चीयतामित्यभिप्रायेणाह—**तर्हीति** । किं लक्षणमित्यत आह—**लोकेति** ॥ १४० ॥

**न निरूपयितुं शक्या विस्पष्टं भासते च या ।**
**सा मायेतीन्द्रजालादौ लोकाः संप्रतिपेदिरे ४१**

तस्या अपि किं लक्षणमित्यत आह—**न निरूपयितुमिति** ॥ ४१ ॥

**स्पष्टं भाति जगच्चेदमशक्यं तन्निरूपणम् ।**
**मायामयं जगत्तस्मादीक्षस्वापक्षपाततः ॥ ४२ ॥**

दृष्टान्ते सिद्धं लक्षणं दार्ष्टान्तिके योजयति—**स्पष्टमि-ति** ॥ ४२ ॥

**निरूपयितुमारब्धे निखिलैरपि पण्डितैः ।**
**अज्ञानं पुरतस्तेषां भाति कक्षासु कासुचित् ४३**

जगतोऽशक्यनिरूपणत्वं कथमित्याशङ्क्य तद्दर्शयति—**निरूपयितुमिति** ॥ ४३ ॥

**देहेन्द्रियादयो भावा वीर्येणोत्पादिताः कथम् ।**
**कथं वा तत्र चैतन्यमित्युक्ते ते किमुत्तरम् ॥४४॥**

अशक्यनिरूपणत्वमेवोदाहरणेन स्पष्टयति—**देहेन्द्रि-यादय इति** ॥ ४४ ॥

**वीर्यस्यैव स्वभावश्चेत्कथं तद्विदितं त्वया ।**
**अन्वयव्यतिरेकौ यौ भग्नौ तौ वन्ध्यवीर्यतः ॥४५॥**

स्वभाववादी शङ्कते—**वीर्यस्येति** । सिद्धान्ती पृच्छ-ति—**कथं तदिति** । अन्वयव्यतिरेकाभ्यां जानामीत्या-शङ्क्य व्याप्त्यभावान्मैवमित्याह—**अन्वयेति** । वन्ध्यवीर्यतः वन्ध्यायां च तत्र वीर्यस्य व्यर्थत्वात् व्याप्तिर्न घटते, यत्र यत्र वीर्यं तत्र तत्र देहादिकमिति नान्वयोऽपि ॥ ४५ ॥

**न जानामि किमप्येतदित्यन्ते शरणं तव ।**
**अत एव महान्तोऽस्य प्रवदन्तीन्द्रजालताम् ॥४६॥**

एवं पुनः पृष्टे सति किमपि न जानामीत्येवोत्तरं देयमिति फलितमाह—**न जानामीति** ॥ ४६ ॥

एतस्मात्किमिवेन्द्रजालमपरं यद्गर्भवासस्थितं
रेतश्चेतति हस्तमस्तकपदप्रोद्भूतनानाङ्कुरम्।
पर्यायेण शिशुत्वयौवनजरावेषैरनेकैर्वृतं
पश्यत्यत्तिशृणोतिजिघ्रतितथागच्छत्यथागच्छति

उक्तानिर्वचनीयत्वे वृद्धसंमतिं दर्शयति—एतस्मादिति ॥ ४७ ॥

देहवद्वटधानादौ सुविचार्य विलोक्यताम्।
क धाना कुत्र वा वृक्षस्तस्मान्मायेति निश्चिनु ४८

न केवलं देहस्यैव दुर्निरूपत्वं किंतु वटवृक्षादेरपीत्याह—देहवदिति ॥ ४८ ॥

निरुक्तावभिमानं ये दधते तार्किकादयः।
हर्षमिश्रादिभिस्ते तु खण्डनादौ सुशिक्षिताः ४९

नन्वस्माभिर्निर्वक्तुमशक्यत्वेऽपि उदयनादिभिराचार्यैर्निरुच्यत इत्याशङ्क्याह—निरुक्ताविति ॥ ४९ ॥

अचिन्त्याः खलु ये भावा न तांस्तर्केषु योजयेत्।
अचिन्त्यरचनारूपं मनसापि जगत्खलु ॥ १५० ॥

उक्तार्थे सांप्रदायिकानां वाक्यं संवादयति—अचिन्त्या इति ॥ १५० ॥

अचिन्त्यरचनाशक्तिबीजं मायेति निश्चिनु।
मायाबीजं तदेवैकं सुषुप्तावनुभूयते ॥ ५१ ॥

ननु भवत्वेवं जगतोऽचिन्त्यरचनात्वं मायायां किमायातमित्यत आह—**अचिन्त्यरचनेति** । अचिन्त्यरचनाशक्तिमत् यद्बीजं कारणं सैव मायेत्यर्थः । नन्वेवंविधं कारणं क्व दृष्टमित्यत आह—**मायेति** ॥ ५१ ॥

**जाग्रत्स्वप्नजगत्तत्र लीनं बीज इव द्रुमः ।**
**तस्मादशेषजगतो वासनास्तत्र संस्थिताः ॥५२॥**

कथं तस्य जगद्बीजत्वमित्यत आह—**जाग्रदिति** । ततः किमित्यत आह—**तस्मादिति** । यतो जगत्कारणं माया अतोऽशेषजगद्वासनास्तत्र मायायां तिष्ठन्तीत्यर्थः५२

**या बुद्धिवासनास्तासु चैतन्यं प्रतिबिम्बति ।**
**मेघाकाशवदस्पष्टचिदाभासोऽनुमीयताम्॥ ५३ ॥**

ततोऽपि किं तत्राह—**या बुद्धीति** । ननु तासु प्रतिबिम्बोऽस्ति चेत्कुतो नानुभूयत इत्याशङ्क्याऽस्पष्टत्वादित्याह—**मेघेति** । तर्हि कुतस्तत्सिद्धिरित्यत आह—**अनुमीयतामिति** ॥ ५३ ॥

**साभासमेव तद्बीजं धीरूपेण प्ररोहति ।**
**अतो बुद्धौ चिदाभासो विस्पष्टं प्रतिभासते ॥५४॥**

ननु मेघांशोदकस्यास्पष्टाकाशप्रतिबिम्बवत्त्वेऽपि तज्जातीयस्य घटोदकस्य स्पष्टाकाशप्रतिबिम्बवतः सद्भावान्मेघाकाशानुमानं घटते, इह तथाविधदृष्टान्ताभावात्कथमनुमानो-

दय इत्याशङ्क्याऽत्रापि तथाविधदृष्टान्तसंपादनायाह—**साभासमिति**। चिदाभासविशिष्टं तदेवाज्ञानं बुद्धिरूपेण परिणममानं विस्पष्टचिदाभासवद्भवतीति भावः। एवं चेदनुमानमत्र सूचितं भवति। विमता बुद्धिवासनाश्रितप्रतिबिम्बवत्यो भवितुमर्हन्ति बुद्ध्यवस्थाविशेषत्वाद्बुद्धिवृत्तिवदिति ॥ ५४ ॥

**मायाभासेन जीवेशौ करोतीति श्रुतौ श्रुतम्।**
**मेघाकाशजलाकाशाविव तौ सुव्यवस्थितौ ॥५५॥**

एवं जीवेश्वरयोर्मायिकत्वं श्रुत्युक्तमुपपादितमुपसंहरति—**मायाभासेनेति**। ननु जीवेशयोर्मायिकत्वे समाने कथमवान्तरभेदसिद्धिरित्याशङ्क्यास्पष्टस्पष्टोपाधिमत्त्वेन मेघाकाशजलाकाशयोरिव तत्सिद्धिरित्याह—**मेघाकाशेति** ५५

**मेघवद्वर्तते माया मेघस्थिततुषारवत्।**
**धीवासनाश्चिदाभासस्तुषारस्थखवत्स्थितः ॥५६॥**

ईशस्य मेघाकाशसाम्यं स्फुटीकरोति—**मेघवदिति**५६

**मायाधीनश्चिदाभासः श्रुतौ मायी महेश्वरः।**
**अन्तर्यामि च सर्वज्ञो जगद्योनिः स एव हि ५७**

मायाप्रतिबिम्बस्येश्वरत्वे किं प्रमाणमित्याशङ्क्य श्रुतिरेवेत्याह—**मायाधीन इति**। न केवलमीश्वरत्वमस्य श्रुतं अपित्वन्तर्यामित्वादिकमपि धर्मजातं श्रुतमस्तीत्याह—**अन्तर्यामीति** ॥ ५७ ॥

**सौषुप्तमानन्दमयं प्रक्रम्यैवं श्रुतिर्जगौ ।**
**एष सर्वेश्वर इति सोऽयं वेदोक्त ईश्वरः ॥ ५८ ॥**

ननु धीवासनाप्रतिबिम्बस्येश्वरत्वादिकं कथं श्रुतिसिद्ध-मित्याशङ्क्य तदुपपादिकां श्रुतिं दर्शयति—**सौषुप्तमिति** । 'सुषुप्तस्थान एकीभूतः प्रज्ञानघन एवे'त्यादिका श्रुतिः धीवासनाप्रतिबिम्बरूपस्यानन्दमयस्येश्वरत्वादिकं प्रतिपादयतीत्यर्थः ॥ ५८ ॥

**सर्वज्ञत्वादिके तस्य नैव विप्रतिपद्यताम् ।**
**श्रौतार्थस्यावितर्क्यत्वान्मायायां सर्वसंभवात् ५९**

नन्वानन्दमयस्य सर्वज्ञत्वादिकमनुभवविरुद्धमित्याशङ्क्याह—**सर्वज्ञत्वादिक इति** । कुत इत्यत आह—**श्रौतेति** । इतोऽपि न विप्रतिपत्तिः कार्येत्याह—**मायायामिति** ॥ ५९ ॥

**अयं यत्सृजते विश्वं तदन्यथयितुं पुमान् ।**
**न कोऽपि शक्तस्तेनायं सर्वेश्वर इतीरितः ॥१६०॥**

नन्वनुकूलयुक्त्यभावे श्रुतिरपि ग्रावप्लववाक्यवदर्थवादः स्यादित्याशङ्क्य श्रुतिप्रामाण्यसिद्धये सर्वेश्वरत्वादिकमुपपादयति—**अयमिति** । अयमानन्दमयो यज्जाग्रदादि विश्वं सृजति तन्न केनाप्यन्यथाकर्तुं शक्यते । अतोऽयं सर्वेश्वर इत्यर्थः ॥ १६० ॥

**अशेषप्राणिबुद्धीनां वासनास्तत्र संस्थिताः ।**
**ताभिः क्रोडीकृतं सर्वं तेन सर्वज्ञ ईरितः ॥ ६१ ॥**

इदानीं सर्वज्ञत्वमुपपादयति—**अशेषेति** । तत्र सौषुप्तेऽज्ञाने कारणभूते कार्यभूतानां सर्वप्राणिबुद्धीनां वासना निवसन्ति, ताभिश्च वासनाभिः सर्वं जगत् क्रोडीकृतं विषयीकृतं, तेन सर्वबुद्धिवासनावदज्ञानोपाधिकत्वेन सर्वज्ञ उच्यत इत्यर्थः ॥ ६१ ॥

**वासनानां परोक्षत्वात्सर्वज्ञत्वं नहीक्ष्यते ।**
**सर्वबुद्धिषु तद्दृष्ट्वा वासनास्वनुमीयताम् ॥ ६२ ॥**

ननु यदि सर्वज्ञत्वमस्ति तर्हि तत् कुतो नानुभूयत इत्याशङ्क्य तदुपाधीनां वासनानां परोक्षत्वान्नानुभव इत्याह—**वासनानामिति** । कथं तर्हि तदवगम इत्याशङ्क्याह—**सर्वबुद्धिष्विति** । सर्वबुद्धिनिष्ठं सर्वज्ञत्वं स्वकारणभूतवासनागतसर्वज्ञत्वपुरःसरं भवितुमर्हति कार्यनिष्ठधर्मविशेषत्वात्पटगतरूपादिवदित्यर्थः ॥ ६२ ॥

**विज्ञानमयमुख्येषु कोशेष्वन्यत्र चैव हि ।**
**अन्तस्तिष्ठन्यमयति तेनान्तर्यामितां व्रजेत् ॥६३॥**

सर्वज्ञत्वमुपपाद्य 'एषोऽन्तर्यामी'ति श्रुत्युक्तमन्तर्यामित्वमुपपादयति—**विज्ञानेति** । अन्यत्र पृथिव्यादौ तिष्ठन् यमयति यतस्तेनेत्यन्वयः ॥ ६३ ॥

**बुद्धौ तिष्ठन्नान्तरोऽस्या धियानीक्ष्यश्च धीवपुः ।**
**धियमन्तर्यमयतीत्येवं वेदेन घोषितम् ॥ ६४ ॥**

अस्मिन्नर्थेऽन्तर्यामिब्राह्मणं कृत्स्नं प्रमाणमिति दर्शयितुं तदेकदेशभूतं 'यो विज्ञाने तिष्ठन्' इत्यादिवाक्यमर्थतोऽनुक्रामति—**बुद्धाविति** ॥ ६४ ॥

**तन्तुः पटे स्थितो यद्वदुपादानतया तथा ।**
**सर्वोपादानरूपत्वात्सर्वत्रायमवस्थितः ॥ ६५ ॥**

इदानीमन्तर्यामिब्राह्मणस्य प्रतिपर्यायव्याख्याने ग्रन्थबाहुल्यभयाद्व्याख्यानस्य सर्वपर्यायसंचारित्वसिद्धये यः सर्वेषु भूतेष्विति पर्यायं व्याचक्षाणो 'यः सर्वेषु तिष्ठन्' इत्यस्यार्थं दृष्टान्तेनाह—**तन्तुरिति** ॥ ६५ ॥

**पटादप्यान्तरस्तन्तुस्तन्तोरप्यंशुरान्तरः ।**
**आन्तरत्वस्य विश्रान्तिर्यत्रासावनुमीयताम् ६६**

ननूपादानतया सर्वत्रायमवस्थितश्चेत् किमिति सर्वत्र नोपलभ्येतेत्याशङ्क्य सर्वान्तरत्वादित्याह—**पटादपीति** । अत्रेदमनुमानं, आन्तरत्वतारतम्यं क्वचिद्विश्रान्तं तारतम्यत्वादणुत्वतारतम्यवदिति ॥ ६६ ॥

**द्वित्रान्तरत्वकक्षाणां दर्शनेऽप्ययमान्तरः ।**
**न वीक्ष्यते ततो युक्तिश्रुतिभ्यामेव निर्णयः॥६७॥**

नन्वान्तरत्वेऽप्यंश्वादिवदन्तर्यामिणो दर्शनं किं न स्या-

दित्याशङ्क्य तेषामिव बाह्यत्वाभावान्न दृश्यत इत्यभिप्रायेणाह—**छिद्रान्तरत्वेति** । कुतस्तर्हि तन्निर्णय इत्यत आह—**तत इति** । अचेनस्य चेतनाधिष्ठानमन्तरेण प्रवृत्त्यनुपपत्तिर्युक्तिः । श्रुतिस्तूदाहृतैव ॥ ६७ ॥

**पटरूपेण संस्थानात्पटस्तन्तोर्वपुर्यथा ।**
**सर्वरूपेण संस्थानात्सर्वमस्य वपुस्तथा ॥ ६८ ॥**

'यस्य सर्वाणि भूतानि शरीरम्' इत्यस्यार्थमाह—**पटरूपेणेति** । पटरूपेणावस्थितस्य तन्तोः पटः शरीरं यथा, एवं सर्वरूपेणावस्थितस्य सर्वशरीरमित्यर्थः ॥ ६८ ॥

**तन्तोः संकोचविस्तारचलनादौ पटस्तथा ।**
**अवश्यमेव भवति न स्वातन्त्र्यं पटे मनाक् ॥६९॥**

'यः सर्वाणि भूतान्यन्तरो यमयति' इति वाक्यस्य तात्पर्यं सदृष्टान्तमाह श्लोकद्वयेन—**तन्तोरिति** ॥ ६९ ॥

**तथान्तर्याम्ययं यत्र यया वासनया यथा ।**
**विक्रियेत तथावश्यं भवत्येव न संशयः ॥ १७० ॥**

**तथेति** । तन्तुसंकोचादिना पटसंकोचादिर्यथा भवति एवं पृथिव्यादिषूपादानत्वेन स्थितोऽन्तर्यामी यया यया वासनया यथा घटादिकार्यरूपेण विक्रियेत तथा तत्कार्यजातमवश्यं भवतीति भावः ॥ १७० ॥

**ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।**
**भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया ॥ ७१ ॥**

एवमन्तर्यामिप्रतिपादिकां श्रुतिमुपन्यस्य स्मृतिमप्युपन्यस्यति—ईश्वर इति ॥ ७१ ॥

**सर्वभूतानि विज्ञानमयास्ते हृदये स्थिताः ।**
**तदुपादानभूतेशस्तत्र विक्रियते खलु ॥ ७२ ॥**

सर्वभूतानामिति पदस्यार्थमाह—**सर्वभूतानीति** । तेच हृदयपुण्डरीके स्थिताः । ननु तेषां कुतो हृद्यवस्थानमित्याशङ्क्य हृद्यन्तर्यामिणो विज्ञानमयाकारेण परिणामादित्याह—**तदुपादानेति** ॥ ७२ ॥

**देहादिपञ्जरं यन्त्रं तदारोहोऽभिमानिता ।**
**विहितप्रतिषिद्धेषु प्रवृत्तिर्भ्रमणं भवेत् ॥ ७३ ॥**

यन्त्रारूढानीत्यत्र यन्त्रारोहशब्दयोरर्थमाह—**देहादीति** । भ्रामयन्नितिपदे प्रकृत्यर्थमाह—**विहितेति**॥७३ ॥

**विज्ञानमयरूपेण तत्प्रवृत्तिस्वरूपतः ।**
**स्वशक्त्येशो विक्रियते मायया भ्रामणं हि तत्७४**

इदानीं णिच्प्रत्ययमायापदयोरर्थमाह—**विज्ञानमयेति** ॥ ७४ ॥

**अन्तर्यमयतीत्युक्त्यायमेवार्थः श्रुतौ श्रुतः ।**
**पृथिव्यादिषु सर्वत्र न्यायोऽयं योज्यतां धिया ७५**

श्रौतस्य यमयतीति पदस्याप्ययमेवार्थ इत्याह—**अन्तर्यमयतीति** । उक्तव्याख्यानं पर्यायान्तरेष्वतिदिशति—**पृथिव्यादिष्विति** ॥ ७५ ॥

**जानासि धर्मं न च मे प्रवृत्ति-**
**र्जानास्यधर्मं न च मे निवृत्तिः ।**
**केनापि देवेन हृदि स्थितेन**
**यथा नियुक्तोऽस्मि तथा करोमि ॥ ७६ ॥**

प्रवृत्तिजातस्य सर्वेश्वराधीनत्वे वचनान्तरमुदाहरति— **जानासि धर्ममिति** ॥ ७६ ॥

**नार्थः पुरुषकारेणेत्येव मा शङ्क्यतां यतः ।**
**ईशः पुरुषकारस्य रूपेणापि विवर्तते ॥ ७७ ॥**

ननु प्रवृत्तेरीश्वराधीनत्वे पुरुषप्रयत्नो व्यर्थः स्यादित्याशङ्क्य पुरुषप्रयत्नस्यापीश्वररूपत्वान्मैवमिति परिहरति— **नार्थ इति** । अर्थः प्रयोजनम् । पुरुषकारः पुरुषप्रयत्नः ७७

**ईदृग्बोधेनेश्वरस्य प्रवृत्तिर्मैव वार्यताम् ।**
**तथापीशस्य बोधेन स्वात्मासङ्गत्वधीजनिः ॥ ७८ ॥**

ननु पुरुषप्रयत्नस्यापीश्वररूपत्वे यमयति भ्रामयतीति प्रतिपादितमन्तर्यामिप्रेरणं वृथा स्यादित्याशङ्क्य तद्बोधेन स्वात्मासङ्गत्वज्ञानलक्षणफलस्य सत्त्वान्मैवमिति परिहरति— **ईदृगिति** । ईदृग्बोधेनेशस्य पुरुषकारादिरूपेणाप्यवस्थानज्ञानेन प्रवृत्तिः अन्तर्यामिरूपेण प्रेरणा ॥ ७८ ॥

**तावता मुक्तिरित्याहुः श्रुतयः स्मृतयस्तथा ।**
**श्रुतिस्मृती ममैवाज्ञे इत्यपीश्वरभाषितम् ॥ ७९ ॥**

आत्मनोऽसङ्गत्वज्ञानेनापि किं प्रयोजनमित्यत आह—**तावतेति**। श्रुतिस्मृत्युदितस्यानतिलङ्घनीयत्वे स्मृतिं दर्शयति—**श्रुतिस्मृती इति** ॥ ७९ ॥

**आज्ञाया भीतिहेतुत्वं भीषास्मादिति हि श्रुतम्।**
**सर्वेश्वरत्वमेतत्स्यादन्तर्यामित्वतः पृथक् ॥१८०॥**

श्रुत्यापीश्वरस्य भीतिहेतुत्वमुक्तमित्याह—**आज्ञाया इति**। ईश्वरस्य भीतिहेतुत्वं किमर्थमुक्तमित्याशङ्क्य सर्वेश्वरत्वस्यान्तर्यामित्वतः पार्थक्यसिद्धय इति मत्वाह—**सर्वेश्वरत्वमिति** ॥ १८० ॥

**एतस्य वा अक्षरस्य प्रशासन इति श्रुतिः।**
**अन्तः प्रविष्टः शास्ताऽयं जनानामिति च श्रुतिः॥**

बहिरन्तश्चेश्वर एव नियामक इत्यत्र श्रुतिद्वयमाह—**एतस्येति** ॥ ८१ ॥

**जगद्योनिर्भवेदेष प्रभवाप्ययकृत्त्वतः।**
**आविर्भावतिरोभावावुत्पत्तिप्रलयौ मतौ ॥ ८२ ॥**

क्रमप्राप्तस्यैष योनिरित्यस्यार्थमाह—**जगद्योनिरिति**। प्रतिज्ञातार्थे 'प्रभवाप्ययौ हि भूतानाम्' इति वाक्यं हेतुत्वेन योजयति—**प्रभवेति**। प्रभवाप्ययावुत्पत्तिप्रलयौ तत्कर्तृत्वाज्जगद्योनिरित्यर्थः। उत्पत्तिप्रलयशब्दयोर्विवक्षितमर्थमाह—**आविर्भावेति**। उत्पत्तिप्रलयावाविर्भावतिरोभावौ मताविति योजना ॥ ८२ ॥

**आविर्भावयति स्वस्मिन्विलीनं सकलं जगत् ।**
**प्राणिकर्मवशादेष पटो यद्वत्प्रसारितः ॥ ८३ ॥**

आविर्भावकारित्वं सदृष्टान्तमुपपादयति—**आविर्भावयतीति** । यथा संकुचितश्चित्रपटः स्वस्य प्रसारणेन स्वनिष्ठानि चित्राण्याविर्भावयति एवमीशोऽपीत्यर्थः ॥ ८३ ॥

**पुनस्तिरोभावयति स्वात्मन्येवाखिलं जगत् ।**
**प्राणिकर्मक्षयवशात्संकोचितपटो यथा ॥ ८४ ॥**

तस्यैव प्रलयकारणत्वं दर्शयति—**पुनरिति** । स एव पटः संकुचितः चित्राणि यथा तिरोभावयति तद्वदित्यर्थः ८४

**रात्रिघस्रौ सुप्तिबोधावुन्मीलननिमीलने ।**
**तूष्णींभावमनोराज्ये इव सृष्टिलयाविमौ ॥ ८५ ॥**

आविर्भावतिरोभावयोर्दृष्टान्तान्तराणि दर्शयति—**रात्रिघस्राविति** । घस्रोऽहः ॥ ८५ ॥

**आविर्भावतिरोभावशक्तिमत्त्वेन हेतुना ।**
**आरम्भपरिणामादिचोद्यानां नात्र संभवः ॥८६॥**

नन्वीश्वरस्य जगद्योनित्वं किं आरम्भकत्वेन किंवा तदाकारपरिणामित्वेन । नाद्यः । अद्वितीयस्यारम्भकत्वात् । न द्वितीयः । निरवयवस्य परिणामासंभवादित्याशङ्क्य विवर्तावदाश्रयणान्नायं दोष इति परिहरति—**आविर्भावेति** ८६

**अचेतनानां हेतुः स्याज्जाड्यांशेनेश्वरस्तथा ।**
**चिदाभासांशतस्त्वेष जीवानां कारणं भवेत् ८७**

नन्वेक एवेश्वरः कथं चेतनाचेतनजगदुपादानं भविष्यतीत्याशङ्क्य उपाधिप्राधान्येनाचेतनोपादानं चित्प्राधान्येन चेतनोपादानं च भविष्यतीत्याह—**अचेतनानामिति** ८७

**तमःप्रधानः क्षेत्राणां चित्प्रधानश्चिदात्मनाम् ।**
**परः कारणतामेति भावनाज्ञानकर्मभिः ॥ ८८ ॥**
**इति वार्तिककारेण जडचेतनहेतुता ।**
**परमात्मन एवोक्ता नेश्वरस्येति चेच्छृणु ॥ ८९ ॥**

ननु मायाविन ईश्वरस्य जगत्कारणत्वप्रतिपादनमनुपपन्नं सुरेश्वराचार्यैः परमात्मन एव तदभिधानादिति शङ्कते द्वाभ्याम्—**तमःप्रधान इति** । तमःप्रधानः तमोगुणप्रधानमायोपाधिकः क्षेत्राणां शरीरादीनां भावनाज्ञानकर्मभिः भावना संस्कारः, ज्ञानं देवताध्यानादि, कर्म पुण्यापुण्यलक्षणं तैर्निमित्तभूतैरित्यर्थः ॥ ८८ ॥ ८९ ॥

**अन्योन्याध्यासमत्रापि जीवकूटस्थयोरिव ।**
**ईश्वरब्रह्मणोः सिद्धं कृत्वा ब्रूते सुरेश्वरः ॥१९०॥**

त्वंपदार्थ इव तत्पदार्थेऽप्यधिष्ठानारोपयोरन्योन्याध्यासस्य विवक्षितत्वान्नैवमिति परिहरति—**अन्योन्याध्यासमिति** ॥ १९० ॥

**सत्यं ज्ञानमनन्तं यद्ब्रह्म तस्मात्समुत्थिताः ।**
**खंवाय्वग्निजलोर्व्योषध्यन्नदेहा इति श्रुतिः ॥९१॥**

ननु सुरेश्वराचार्यैरीश्वरब्रह्मणोरन्योन्याध्यासः सिद्धवत्कृत्य व्यवहृत इति कुतोऽवगम्यत इत्याशङ्क्य श्रुत्यर्थपर्यालोचनवशादिति दर्शयितुं श्रुतिमर्थतः पठति—**सत्यमिति** ॥ ९१ ॥

**आपातदृष्टितस्तत्र ब्रह्मणो भाति हेतुता ।**
**हेतोश्च सत्यता तस्मादन्योन्याध्यास इष्यते॥९२॥**

भवत्वेषा श्रुतिरनया कथमन्योन्याध्यासावगतिरित्यत आह—**आपातेति** । तत्र तस्यां श्रुतौ सत्यादिलक्षणस्य निर्गुणब्रह्मणो जगत्कारणत्वं जगत्कारणस्य मायाधीनचिदाभासस्य च सत्यत्वमापाततः प्रतीयमानमन्योन्याध्यासमन्तरेण न घटत इति भावः ॥ ९२ ॥

**अन्योन्याध्यासरूपोऽसावन्नलिप्तपटो यथा ।**
**घट्टितेनैकतामेति तद्भ्रान्त्यैकतां गतः ॥ ९३ ॥**

एवमन्योन्याध्याससिद्धमीश्वरब्रह्मणोरेकत्वं पूर्वमुदाहृतं घट्टितपटदृष्टान्तस्मारणेन द्रढयति—**अन्योन्येति** ॥ ९३ ॥

**मेघाकाशमहाकाशौ विविच्येते न पामरैः ।**
**तद्ब्रह्मेशयोरैक्यं पश्यन्त्यापातदर्शिनः ॥ ९४ ॥**

भ्रान्त्यैकत्वापत्तौ दृष्टान्तमभिधाय आपातदर्शिनां भेदाप्र-

तीतौ पूर्वोक्तमेव दृष्टान्तान्तरं दर्शयति—**मेघाकाशेति** । तद्वत् ब्रह्मेशयोरैक्यं पश्यन्ति न भेदमित्यर्थः ॥ ९४ ॥

**उपक्रमादिभिर्लिङ्गैस्तात्पर्यस्य विचारणात् ।**
**असङ्गं ब्रह्म मायावी सृजत्येष महेश्वरः ॥ ९५ ॥**

कुतस्तर्हि ब्रह्मेशयोर्भेदावगतिरित्यत आह—**उपक्रमेति** । 'उपक्रमोपसंहारावभ्यासोऽपूर्वताफलम् । अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये ॥' इत्युक्तेः षड्विधैर्लिङ्गैः श्रुतितात्पर्यावधारणे सति ब्रह्मासङ्गं मायावी स्रष्टेत्यवगम्यत इति शेषः ॥ ९५ ॥

**सत्यं ज्ञानमनन्तं चेत्युपक्रम्योपसंहृतम् ।**
**यतो वाचो निवर्तन्त इत्यसङ्गत्वनिर्णयः ॥ ९६ ॥**

श्रुतावुपक्रमोपसंहारैकरूपप्रदर्शनेनोक्तं ब्रह्मणोऽसङ्गत्वं स्पष्टयति—**सत्यमिति** । अतोऽसङ्गत्वनिर्णयो भवतीति शेषः ॥ ९६ ॥

**मायी सृजति विश्वं सन्निरुद्धस्तत्र मायया ।**
**अन्य इत्यपरा ब्रूते श्रुतिस्तेनेश्वरः सृजेत् ॥ ९७ ॥**

मायाविन ईश्वरस्य स्रष्टृत्वप्रतिपादिकां श्रुतिमर्थतो दर्शयति—**मायीति** । 'अस्मान्मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया संनिरुद्धः' इति श्रुतिरीश्वरस्य स्रष्टृत्वं जीवस्य तत्र जगति बद्धत्वं च दर्शयतीति भावः ॥ ९७ ॥

**आनन्दमय ईशोऽयं बहु स्यामित्यवैक्षत ।**
**हिरण्यगर्भरूपोऽभूत्सुप्तिः स्वप्नो यथा भवेत् ॥९८॥**

एवमानन्दमयस्येश्वरस्य जगत्कारणत्वं प्रतिपाद्य तस्माज्जगदुत्पत्तिप्रकारमाह—**आनन्दमय इति** । ईक्षित्वा च हिरण्यगर्भरूपोऽभूदित्यन्वयः । तत्र दृष्टान्तमाह—**सुप्तिरिति** ॥ ९८ ॥

**क्रमेण युगपद्वैषा सृष्टिर्ज्ञेया यथाश्रुति ।**
**द्विविधश्रुतिसद्भावाद्द्विविधस्वप्नदर्शनात् ॥ ९९ ॥**

'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' इत्यादौ क्रमेण सृष्टिश्रवणात् 'इदं सर्वमसृजत' इति युगपच्छ्रवणाच्च कस्योपादेयत्वं कस्य वा हेयत्वमित्याकाङ्क्षायां श्रुतियुक्त्युपेतत्वादुभयं ग्राह्यमित्याह—**क्रमेणेति** । एषा जगत्सृष्टिर्द्विविधश्रुतिसद्भावात् क्रमेण युगपद्वा यथाश्रुति ज्ञेयेति योजना । तत्रोपपत्तिर्द्विविधस्वप्नदर्शनादिति । लोके क्रमयुक्तस्य चाक्रमयुक्तस्य च स्वप्नपदार्थजातस्य दर्शनादिति भावः ९९

**सूत्रात्मा सूक्ष्मदेहाख्यः सर्वजीवघनात्मकः ।**
**सर्वाहंमानधारित्वात्क्रियाज्ञानादिशक्तिमान् २००**

हिरण्यगर्भस्य स्वरूपं निरूपयति—**सूत्रात्मेति** । सूत्रात्मा पटे सूत्रमिव जगत्यनुस्यूत आत्मा स्वरूपं यस्य स सूक्ष्मदेह इत्याख्या यस्य स तथाविधः सर्वजीवघनात्मकः

सर्वेषां जीवानां लिङ्गशरीरोपाधिकानां घनात्मकः समष्टिस्वरूपः। तत्र हेतुः—**सर्वाहंमानेति**। सर्वेषु व्यष्टिलिङ्गशरीरेषु अहंमानवत्त्वादिति भावः। इच्छाज्ञानक्रियाशक्तिमांश्च ॥ २०० ॥

**प्रत्यूषे वा प्रदोषे वा मग्नो मन्दे तमस्ययम्।**
**लोको भाति यथा तद्वदस्पष्टं जगदीक्ष्यते ॥ १ ॥**

हिरण्यगर्भावस्थायां जगत्प्रतीतौ दृष्टान्तमाह—**प्रत्यूष इति**। प्रत्यूष उषःकालः ॥ १ ॥

**सर्वतो लाञ्छितो मष्या यथा स्याद्घट्टितः पटः।**
**सूक्ष्माकारैस्तथेशस्य वपुः सर्वत्र लाञ्छितम् ॥२॥**

एवं लोकप्रसिद्धदृष्टान्तमभिधाय यथा धौत इति पूर्वोक्तश्लोकेऽभिहितं लाञ्छितं पटं दृष्टान्तयति—**सर्वत इति**। यथा घट्टितः पटो मषीमयैराकारविशेषैर्लाञ्छितो भवति, तथा मायिन ईश्वरस्य वपुः अपञ्चीकृतभूतकार्यैर्लिङ्गशरीरैर्लाञ्छितमित्यर्थः ॥ २ ॥

**सस्यं वा शाकजातं वा सर्वतोङ्कुरितं यथा।**
**कोमलं तद्वदेवैष पेलवो जगदङ्कुरः ॥ ३ ॥**

बुद्ध्यारोहाय वैभवात् दृष्टान्तान्तरमाह—**सस्यं वेति** ३

**आतपाभातलोको वा पटो वा वर्णपूरितः।**
**सस्यं वा फलितं यद्वत्तथा स्पष्टवपुर्विराट् ॥ ४ ॥**

एवं सूत्रात्मस्वरूपं विशदीकृत्य तस्यैवावस्थाभेदं पञ्चीकृतभूतकार्योपाधिकं विराजं दृष्टान्तत्रयेण विशदयति—**आतपेति**। सूर्योदयानन्तरमातपेन प्रकाशितो लोक आतपाभातलोकः ॥ ४ ॥

**विश्वरूपाध्याय एष उक्तः सूक्तेऽपि पौरुषे।**
**धात्रादिस्तम्बपर्यन्तानेतस्यावयवान्विदुः ॥ ५ ॥**

तत्सद्भावे प्रमाणमाह—**विश्वरूपेति**। विश्वरूपाध्यायादौ कीदृग्रूपमुदितमित्याकाङ्क्षायां ब्रह्मादिस्तम्बपर्यन्तजगद्रूपमुदितमित्याह—**धात्रादीति** ॥ ५ ॥

**ईशसूत्रविराड्वेधोविष्णुरुद्रेन्द्रवह्नयः।**
**विघ्नभैरवमैरालमरिकायक्षराक्षसाः ॥ ६ ॥**
**विप्रक्षत्रियविट्शूद्रा गवाश्वमृगपक्षिणः।**
**अश्वत्थवटचूताद्या यवव्रीहितृणादयः ॥ ७ ॥**
**जलपाषाणमृत्काष्ठवास्याकुद्दालकादयः।**
**ईश्वराः सर्व एवैते पूजिताः फलदायिनः ॥ ८ ॥**

एतावता प्रकृते किमायातमित्याशङ्क्याऽन्तर्यामिप्रभृतिकुद्दालकादिपर्यन्तं वस्तुजातं प्रत्येकमीश्वरत्वेन पूज्यतामित्याह—**ईशेत्यादिना** श्लोकत्रयेण ॥ ६ ॥ ७ ॥ ८ ॥

**यथायथोपासते तं फलमीयुस्तथातथा।**
**फलोत्कर्षापकर्षौ तु पूज्यपूजानुसारतः ॥ ९ ॥**

'ते यथायथोपासते तदेव भवति' इति श्रुतिः तत्पूजातत्तत्फलसद्भावे प्रमाणमित्याह—**यथायथेति** । ननु सर्वेषामीश्वरत्वे फलवैषम्यं कुत इत्याशङ्क्य पूज्यानामधिष्ठानानां पूजनानामर्चादीनां च सात्विकादिभेदेन वैषम्यमित्याह—**फलोत्कर्षेति** ॥ ९ ॥

**मुक्तिस्तु ब्रह्मतत्त्वस्य ज्ञानादेव न चान्यथा ।**
**स्वप्रबोधं विना नैव स्वस्वप्नो हीयते यथा ॥२१०॥**

सांसारिकफलसिद्धिरेवं भवतु मुक्तिः कस्योपासनाद्भवतीत्याशङ्क्य ज्ञानव्यतिरेकेण केनापि न भवतीत्याह—**मुक्तिरिति** । तत्र दृष्टान्तमाह—**स्वप्रबोधमिति** । स्वजागरणमन्तरेण स्वनिद्राकल्पितस्वप्नो यथा न निवर्तते तथा ब्रह्मतत्त्वज्ञानमन्तरेण तदज्ञानकल्पितः स्वसंसारो न निवर्तेत इति भावः ॥ २०१ ॥

**अद्वितीयब्रह्मतत्त्वे स्वप्नोऽयमखिलं जगत् ।**
**ईशजीवादिरूपेण चेतनाचेतनात्मकम् ॥ ११ ॥**

ननु द्वैतनिवृत्तिलक्षणाया मुक्तेः स्वप्नदृष्टान्तेन तत्त्वबोधसाध्यत्वाभिधानमनुपपन्नं निवर्त्यस्य द्वैतस्य स्वप्नतुल्यत्वाभावादित्याशङ्क्यान्यथाग्रहणरूपत्वेन स्वप्नतुल्यत्वमस्त्येव 'त्रयमेतत्सुषुप्तं स्वप्नं मायामात्रम्' इति श्रुत्याभिहितत्वान्मैवमित्याह—**अद्वितीयेति** । ईशजीवादिरूपेण वर्तमानं चेत-

नाचेतनात्मकं यदखिलं जगदस्त्ययमद्वितीयब्रह्मतत्त्वे स्वप्न इति योजना ॥ ११ ॥

**आनन्दमयविज्ञानमयावीश्वरजीवकौ ।**
**मायया कल्पितावेतौ ताभ्यां सर्वं प्रकल्पितम् ॥**

नन्वीशजीवयोर्ब्रह्माभिन्नयोः कथं जगदन्तःपातित्वमित्याशङ्क्य तयोर्मायाकल्पितत्वेन जगदन्तःपातित्वमित्याह—**आनन्दमयेति** ॥ १२ ॥

**ईक्षणादिप्रवेशान्ता सृष्टिरीशेन कल्पिता ।**
**जाग्रदादिविमोक्षान्तः संसारो जीवकल्पितः १३**

ताभ्यां सर्वं कल्पितमित्युक्तं तत्र केन कियत्कल्पितमित्याकाङ्क्षायामाह—**ईक्षणादीति** । 'स ऐक्षत लोकान्नु सृजा' इत्यादिकया 'एतया द्वारा प्रापद्यत' इत्यन्तया श्रुत्या प्रतिपादिता सृष्टिरीश्वरकर्तृका 'तस्य त्रय आवसथाः' इत्यादिकया 'स एतमेव पुरुषं ब्रह्म ततममपश्यत्' इत्यन्तया श्रुत्या प्रतिपादितः संसारो जीवकर्तृक इत्यर्थः ॥ १३ ॥

**अद्वितीयं ब्रह्मतत्त्वमसङ्गं तन्न जानते ।**
**जीवेशयोर्मायिकयोर्वृथैव कलहं ययुः ॥ १४ ॥**

ननु ब्रह्मण एव पारमार्थिकत्वे वादिनां जीवेश्वरतत्त्वविषया विप्रतिपत्तिः कुत इत्याशङ्क्य श्रुतिसिद्धतत्त्वज्ञानशून्यत्वादित्याह—**अद्वितीयमिति** ॥ १४ ॥

**ज्ञात्वा सदा तत्त्वनिष्ठां ननु मोदामहे वयम् ।**
**अनुशोचाम एवान्यान्न भ्रान्तेर्विवदामहे ॥ १५ ॥**

जीवेश्वरविषयाया वादिविप्रतिपत्तेः अज्ञानमूलत्वे तथाविधतत्त्वेन बोधनीया इत्याशङ्क्य वृथाश्रमत्वान्नेत्याह—**ज्ञात्वेति** ॥ १५ ॥

**तृणार्चकादियोगान्ता ईश्वरे भ्रान्तिमाश्रिताः ।**
**लोकायतादिसांख्यान्ता जीवे विभ्रान्तिमाश्रिताः**

ईश्वरे जीवे च भ्रान्त्या विप्रतिपन्नान् वादिनो विभज्य दर्शयति—**तृणेति** ॥ १६ ॥

**अद्वितीयब्रह्मतत्त्वं न जानन्ति यदा तदा ।**
**भ्रान्ता एवाखिलास्तेषां क्व मुक्तिः क्वेह वा सुखम्**

कुतो भ्रान्तत्वं तेषामित्यत आह—**अद्वितीयेति** । ततः किं तत्राह—**तेषामिति** । परिगृहीतपक्षप्रतिपादनाभिनिवेशेन चित्तविश्रान्त्यभावान्नैहिकमपि सुखं तेषामित्याह—**क्वेह वेति** ॥ १७ ॥

**उत्तमाधमभावश्चेत्तेषां स्यादस्तु तेन किम् ।**
**स्वप्नस्थराज्यभिक्षाभ्यां न बुद्धः स्पृश्यते खलु १८**

ननु तेषां ब्रह्मविद्याभावेऽपि इतरविद्याप्रयुक्त उत्तमाधमभावो दृश्यते उत्तमत्वप्रयुक्तं सुखं केषांचित्स्यादित्याशङ्क्य तस्य मुमुक्षुभिरनादरणीयत्वं दृष्टान्तेनाह—**उत्तमाधमेति** १८

**तस्मान्मुमुक्षुभिर्नैव मतिर्जीवेशवादयोः ।**
**कार्या किंतु ब्रह्मतत्त्वं विचार्य बुध्यतां च तत् १९**

जीवेश्वरवादयोर्मुक्तिहेतुत्वाभावान्न मुमुक्षुभिस्तत्र मतिर्निवेशनीयेत्युपसंहरति—**तस्मादिति** । तर्हि किं कर्तव्यमित्याशङ्क्य श्रुतिविचारेण ब्रह्मबोध एव कर्तव्य इत्याह—**किंत्विति** ॥ १९ ॥

**पूर्वपक्षतया तौ चेत्तत्त्वनिश्चयहेतुताम् ।**
**प्राप्नुतोऽस्तु निमज्जस्व तयोर्नैतावताऽवशः २२०**

ननु ब्रह्मतत्त्वनिश्चयाय तयोः स्वरूपं हेयत्वेन ज्ञातव्यमित्याशङ्क्य तथात्वे जीवेशवादयोरेव बुद्धिर्न परिसमापनीयेत्याह—**पूर्वपक्षतयेति** । एतावता पूर्वपक्षतया तत्त्वनिर्णयहेतुत्वसंभवेन तयोर्जीवेशवादयोरेवावशो विवेकज्ञानशून्यो न निमज्जस्वेति योजना ॥ २२० ॥

**असङ्गचिद्विभुर्जीवः सांख्योक्तस्तादृगीश्वरः ।**
**योगोक्तस्तत्त्वमोरर्थौ शुद्धौ ताविति चेच्छृणु २१**

ननु सांख्ययोगशास्त्रोक्तयोर्जीवेशयोः शुद्धचिद्रूपत्वेन भवद्भिरप्युपादेयत्वान्न तयोः पूर्वपक्षत्वमिति शङ्कते—**असङ्गचिदिति** । सांख्ययोगशास्त्रोक्तयोर्जीवेशयोः शुद्धचिद्रूपत्वेऽपि तयोर्वास्तवभेदस्य तैरङ्गीकारान्नायमस्मत्सिद्धान्त इत्याह—**शृण्विति** ॥ २१ ॥

**समुत्थायैष भूतेभ्यस्तान्येवानु विनश्यति ।**
**विस्पष्टमिति मैत्रेय्यै याज्ञवल्क्य उवाच हि ३९**

'प्रज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञास्ति' इति औपाधिकरूपस्य विनाशित्वप्रतिपादिकां श्रुतिं दर्शयति—**समुत्थायेति** । एष प्रज्ञानघन आत्मा एतेभ्यो देहेन्द्रियादिरूपेभ्यः पञ्चभूतकार्येभ्यो निमित्तभूतेभ्य उपाधिभ्यः समुत्थाय जीवत्वाभिमानं प्राप्य तान्येव देहादीनि विनश्यन्त्यनु विनश्यति, तेषु विनश्यत्सु तत्कृतं जीवत्वाभिमानं जहाति । एवंप्रकारेण सोपाधिकरूपस्य विनाशित्वं याज्ञवल्क्यो मैत्रेय्यै उवाच उक्तवानित्यर्थः ॥ ३९ ॥

**अविनाश्ययमात्मेति कूटस्थः प्रविवेचितः ।**
**मात्रासंसर्ग इत्येवमसङ्गत्वस्य कीर्तनात् ॥ ४० ॥**

'अविनाशी वा अरेऽयमात्मानुच्छित्तिधर्मा' इति श्रुत्या कूटस्थस्ततो विभिन्नः प्रदर्शित इत्याह—**अविनाशीति** । 'मात्रासंसर्गस्त्वस्य भवति' इति श्रुत्याऽविनाशित्वे हेतुमसङ्गत्वं चोक्तवानित्याह—**मात्रेति** । मीयन्ते इति मात्रा देहादयस्ताभिरस्यात्मनोऽसंसर्गो भवतीत्यर्थः ॥ ४० ॥

**जीवापेतं वाव किल शरीरं म्रियते न सः ।**
**इत्यत्र न विमोक्षोऽर्थः किंतु लोकान्तरे गतिः ४१**

ननु 'जीवापेतं वाव किल इदं म्रियते न जीवो म्रियते' इति श्रुत्या अस्य औपाधिकस्याप्यविनाशित्वं प्रतिपाद्यत इत्याशङ्क्य तस्याः श्रुतेर्देहान्तरप्राप्तिविषयतया नात्यन्तिकनाशाभावपरत्वमित्याह—**जीवापेतमिति**। जीवापेतं जीवरहितं। जीवेन त्यक्तमिति यावत्। वाव एव। जीवो न म्रियत इत्यर्थः॥४१॥

**नाहं ब्रह्मेति बुध्येत स विनाशीति चेन्न तत्।**
**सामानाधिकरण्यस्य बाधायामपि संभवात् ४२**

ननु जीवस्य विनाशित्वेऽहं ब्रह्मास्मीत्यविनाशिब्रह्मतादात्म्यज्ञानं न घटत इति शङ्कते—**नाहमिति**। विनाशी स जीवोऽहं ब्रह्मेति ब्रह्मरूपेणात्मानं न बुध्येत न जानीयाद्विनाश्यविनाशिनोरेकत्वविरोधादिति चेन्मुख्यसामानाधिकरण्याभावेऽपि बाधायां सामानाधिकरण्यसंभवात्। जीवभावबाधेन ब्रह्मभावोऽवगन्तुं शक्यत इत्याह—**न तदिति**॥

**योऽयं स्थाणुः पुमानेष पुंधिया स्थाणुधीरिव।**
**ब्रह्मास्मीति धियाऽशेषाप्यहंबुद्धिर्निवर्त्यते ॥४३॥**

बाधासामानाधिकरण्येन वाक्यार्थप्रतिपत्तिप्रकारो वार्तिककारैः सदृष्टान्तोऽभिहित इतीममर्थं तद्वाक्योदाहरणपूर्वकं दर्शयति—**योऽयं स्थाणुरिति**। स्थाणुरेष पुमानित्यस्मिन्वाक्ये पुरुषत्वबोधेन स्थाणुत्वबुद्धिर्निवर्त्यते यथा—एवमहं ब्रह्मास्मीति बोधेनाहंबुद्धिः कर्ताहमस्मीत्येवमादिरूपसर्वापि निवर्त्यत इति ॥ ४३ ॥

**नैष्कर्म्यसिद्धावप्येवमाचार्यैः स्पष्टमीरितम् ।**
**सामानाधिकरण्यस्य बाधार्थत्वमतोऽस्तु तत् ४४**

**नैष्कर्म्येति** । एवमुक्तेन प्रकारेणाचार्यैर्वार्तिककारैर्नैष्कर्म्यसिद्धौ सामानाधिकरण्यस्य बाधार्थत्वं स्पष्टमीरितमिति फलितमाह—**अतोऽस्तु तदिति** । अतः कारणात् ब्रह्माहमस्मीति वाक्ये तत् सामानाधिकरण्यस्य बाधार्थत्वमस्त्वित्यर्थः ॥४४॥

**सर्वं ब्रह्मेति जगता सामानाधिकरण्यवत् ।**
**अहंब्रह्मेति जीवेन सामानाधिकृतिर्भवेत् ॥ ४५ ॥**

नन्वेवमपि श्रुतिषु बाधायां सामानाधिकरण्यं न क्वापि दृष्टमित्याशङ्क्य सर्वं ह्येतद्ब्रह्मेत्यत्र बाधायां सामानाधिकरण्यं दृष्टमतोऽत्रापि तद्भविष्यतीत्याह—**सर्वं ब्रह्मेतीति** ॥४५॥

**सामानाधिकरण्यस्य बाधार्थत्वं निराकृतम् ।**
**प्रयत्नतो विवरणे कूटस्थस्य विवक्षया ॥ ४६ ॥**

ननु तर्हि विवरणाचार्यैर्बाधासामानाधिकरण्यं कुतो निराकृतमित्याशङ्क्य तैरहंशब्देन कूटस्थस्य विवक्षितत्वादित्याह —**सामानाधिकरण्यस्येति** ॥ ४६ ॥

**शोधितस्त्वंपदार्थो यः कूटस्थो ब्रह्मरूपताम् ।**
**तस्य वक्तुं विवरणे तथोक्तमितरत्र च ॥ ४७ ॥**

कूटस्थत्वविवक्षयेत्युक्तमर्थं विवृणोति—**शोधित इति** । शोधितो बुद्ध्यादिभ्यो विवेचितस्त्वंपदलक्ष्यो यः कूटस्थो

वक्ष्यमाणलक्षणस्तस्य ब्रह्मरूपतां सत्यत्वादिलक्षणब्रह्मरूपतां वक्तुं विवरणादिषु बाधासामानाधिकरण्यनिराकरणपूर्वकं मुख्यसामानाधिकरण्यमुक्तमित्यर्थः ॥ ४७ ॥

**देहेन्द्रियादियुक्तस्य जीवाभासभ्रमस्य वा ।**
**अधिष्ठानचितिः सैषा कूटस्थात्र विवक्षिता ४८**

इदानीं कूटस्थस्य ब्रह्मणैक्यं संभावयितुं कूटस्थशब्देन विवक्षितमर्थमाह—**देहेति** । आदिशब्देन मनआदयो गृह्यन्ते । एवंच देहेन्द्रियादियुक्तस्य शरीरद्वययुक्तस्य जीवाभासभ्रमस्य चिदाभासरूपभ्रमस्य याधिष्ठानचितिर्यदधिष्ठानचैतन्यमस्ति तदत्र वेदान्तेषु कूटस्थत्वेन विवक्षितमित्यर्थः ॥ ४८ ॥

**जगद्भ्रमस्य सर्वस्य यदधिष्ठानमीरितम् ।**
**त्रय्यन्तेषु तदत्र स्याद्ब्रह्मशब्दविवक्षितम् ॥ ४९ ॥**

ब्रह्मशब्दस्य चार्थमाह—**जगदिति** । कृत्स्नजगत्कल्पनाधिष्ठानं यच्चैतन्यं वेदान्तेषु निरूपितं तदत्र ब्रह्मशब्देन विवक्षितमित्यर्थः ॥ ४९ ॥

**एतस्मिन्नेव चैतन्ये जगदारोप्यते यदा ।**
**तदा तदेकदेशस्य जीवाभासस्य का कथा ॥५०॥**

ननु जीवभ्रमाधिष्ठानं चैतन्यं कूटस्थ इत्युक्तमनुपपन्नं जीवस्यारोपितत्वासिद्धेरित्याशङ्क्य तस्यारोपितत्वं कैमुतिक-

न्यायेन साधयति—**एतस्मिन्निति** । जगदेकदेशत्वं च 'अनेन जीवेनानुप्रविश्य' इत्यादिश्रुतिसिद्धम् ॥ ५० ॥

**जगत्तदेकदेशाख्यसमारोप्यस्य भेदतः ।**
**तत्त्वंपदार्थौ भिन्नौ स्तो वस्तुतस्त्वेकता चितेः॥५१**

ननु जगदधिष्ठानचैतन्यस्यैकत्वात्तत्त्वंपदार्थयोर्भेदाभावे तत्त्वंपदार्थयोः पौनरुक्त्यमित्याशङ्क्य तयोरौपाधिको भेदो वास्तवमैक्यमित्याह—**जगदिति** । जगत्तदेकदेश इति च आख्या यस्य समारोप्यस्य तत्तथा । जातावेकवचनम् ॥ ५१ ॥

**कर्तृत्वादीन्बुद्धिधर्मान्स्फूर्त्याख्यां चात्मरूपताम् ।**
**दधद्विभाति पुरत आभासोऽतो भ्रमो भवेत् ५२**

ननु चिदाभासस्य शुक्तिकारजतादिवदधिष्ठानारोप्योभयधर्मवत्त्वानुपलम्भात्कथमारोपितत्वमित्याशङ्क्याह—**कर्तृत्वादीनिति** । बुद्ध्युपाधिद्वारा समारोप्यमाणान्कर्तृत्वभोक्तृत्वप्रमातृत्वादीन् स्फुरणलक्षणमात्मरूपत्वं च दधत्पुरतो भाति स्पष्टं प्रतिभासते अत आभासः कल्पित इत्यर्थः ॥५२॥

**का बुद्धिः कोऽयमाभासः को वात्मात्र जगत्कथम्**
**इत्यनिर्णयतो मोहः सोऽयं संसार इष्यते ॥५३॥**

अस्य भ्रमस्य किं कारणमित्याकाङ्क्षायां बुद्ध्यादिस्वरूपापरिज्ञानमेवेत्याह—**का बुद्धिरिति** । तस्य निवर्तनीयत्वाय अनर्थहेतुतामाह—**सोऽयमिति** ॥ ५३ ॥

**बुद्ध्यादीनां स्वरूपं यो विविनक्ति स तत्त्ववित् ।**
**स एव मुक्त इत्येवं वेदान्तेषु विनिश्चयः ॥ ५४ ॥**

अस्य किं निवर्तकमित्याकाङ्क्षायां बुद्ध्यादिस्वरूपविवेक एव निवर्तक इत्यभिप्रेत्य तद्वानेव ज्ञानी तत एवार्थनिवृत्तिरित्याह—**बुद्ध्यादीनामिति** ॥ ५४ ॥

**एवं च सति बन्धः स्यात्कस्येत्यादिकुतर्कजाः ।**
**विडम्बना दृढं खण्ड्याः खण्डनोक्तिप्रकारतः ५५**

एवं बन्धमोक्षयोरविवेकमूलत्वे सति अद्वैतवादे कस्य बन्धः कस्य वा मोक्ष इत्येवमादिरूपास्तार्किकैः क्रियमाणाः कुतर्कमूलाः परिहासविशेषाः खण्डनोक्तयुक्तिभिस्तेषां निरुत्तरत्वापादनेन परिहरणीया इत्याह—**एवमिति** ॥ ५५ ॥

**वृत्तेः साक्षितया वृत्तिप्रागभावस्य च स्थितः ।**
**बुभुत्सायां तथाज्ञोऽस्मीत्याभासज्ञानवस्तुनः ५६**

एवं श्रुतियुक्तिभ्यां कूटस्थं बुद्ध्यादिभ्यो विविच्य दर्शयित्वा पुराणेष्वपि तद्विवेकः कृत इत्याह—**वृत्तेरित्यादिश्लोकत्रयेण** । कामादिवृत्त्युत्पत्तौ सत्यां तत्साक्षित्वेन वृत्त्युदयात्पूर्वं तत्प्रागभावसाक्षित्वेन जिज्ञासायां सत्यां तत्साक्षित्वेन ततः पूर्वमज्ञोऽस्मीत्यनुभूयमानाज्ञानसाक्षित्वेन च शिव एव तिष्ठति ॥ ५६ ॥

**असत्यालम्बनत्वेन सत्यः सर्वजडस्य तु ।**
**साधकत्वेन चिद्रूपः सदा प्रेमास्पदत्वतः ॥ ५७ ॥**

स चासत्यस्य जगतः आलम्बनत्वेन अधिष्ठानत्वेन सत्यः, जडस्य सर्वस्य साधकत्वेनावभासकत्वात् चिद्रूपकः, सर्वदा प्रेमविषयत्वादानन्दरूपः ॥ ५७ ॥

**आनन्दरूपः सर्वार्थसाधकत्वेन हेतुना ।**
**सर्वसंबन्धवत्त्वेन संपूर्णः शिवसंज्ञितः ॥ ५८ ॥**

सर्वार्थावभासकत्वेन सर्वसंबन्धित्वात्संपूर्ण इत्युच्यते । अत्र चेदमभिप्रेतम् । विमतः शिवः वृत्त्यादिभ्यो भिद्यते । वृत्त्यादिसाक्षित्वाद्, यद्यद्वृत्त्यादिभ्यो न भिद्यते तत्तद्वृत्त्यादिसाक्षि न भवति यथा वृत्त्यादि, विमतः सत्यो भवितुमर्हति मिथ्याधिष्ठानत्वात् सत्यरजताधिष्ठानशुक्तिवत्, विमतश्चिद्रूपः जडमात्रावभासकत्वात् यच्चिद्रूपं न भवति तत्सर्वं जडावभासकमपि न भवति यथा घटादि, विमतः परमानन्दरूपः परप्रेमास्पदत्वात् यत्परमानन्दरूपं न भवति तत्परप्रेमास्पदमपि न भवति यथा घटादि, विमतः परिपूर्णः सर्वसंबन्धित्वाद्गगनवत् । सर्वसंबन्धित्वं च सर्वार्थसाधकत्वेन, विमतः सर्वसंबन्धवान् सर्वावभासकत्वाद् यः सर्वसंबन्धवान् न भवति स सर्वावभासकोऽपि न भवति यथा दीपादिरिति ॥ ५८ ॥

**इति शैवपुराणेषु कूटस्थः प्रविवेचितः ।**
**जीवेशत्वादिरहितः केवलः स्वप्रभः शिवः ॥५९॥**

उदाहृतपुराणवाक्यस्य तात्पर्यमाह—**इतीति** । इत्येवंप्रकारेण सूतसंहितादिपुराणेषु जीवेश्वरत्वादिकल्पनारहितः केवलोऽद्वितीयः स्वप्रभः स्वयंप्रकाशः चैतन्यरूपः शिवः कूटस्थो विवेचित इत्यन्वयः ॥ ५९ ॥

**मायाभासेन जीवेशौ करोतीति श्रुतत्वतः ।**
**मायिकावेव जीवेशौ स्वच्छौ तौ काचकुम्भवत् ॥**

जीवेशत्वादिरहितत्वं कुत इत्याशङ्क्य श्रुत्या तयोर्मायिकत्वप्रदर्शनादित्याह—**मायेति** । 'जीवेशावाभासेन करोति माया चाविद्या च स्वयमेव भवति' इति श्रुतिर्मायाविद्याधीनयोश्चिदाभासयोर्मायिकत्वं प्रतिपादयतीति भावः । मायिकत्वे तयोर्देहादिभ्यो वैलक्षण्यं न स्यादित्याशङ्क्य पार्थिवत्वाविशेषेऽपि काचकुम्भस्य घटादिभ्यो वैलक्षण्यमिवानयोरपि स्यादित्याह—**स्वच्छाविति** ॥ ६० ॥

**अन्नजन्यं मनो देहात्स्वच्छं यद्वत्तथैव तौ ।**
**मायिकावपि सर्वस्मादन्यस्मात्स्वच्छतां गतौ ॥ ६१ ॥**

ननु घटकाचकुम्भारम्भकयोर्मृद्विशेषयोर्भेदात्तद्वैलक्षण्यमुचितं जगज्जीवेश्वरभेदहेतोर्मायाया एकत्वात्तयोर्जगतो वैलक्षण्यमनुचितमित्याशङ्क्य अन्नजन्ययोर्देहमनसोर्यथा वैलक्षण्यं तद्वदित्याह—**अन्नेति** ॥ ६१ ॥

**चिद्रूपत्वं च संभाव्यं चित्त्वेनैव प्रकाशनात् ।**
**सर्वकल्पनशक्ताया मायाया दुष्करं नहि ॥ ६२ ॥**

भवतु काचादिवत्स्वच्छत्वं चित्त्वं तु कुत इत्याशङ्क्यानुभवादित्याह—**चिद्रूपेति**। चिद्रूपत्वेन प्रकाशनमपि मायिकयोरनुपपन्नमित्याशङ्क्य तस्या दुर्घटकारित्वादुपपन्नमित्याह—**सर्वेति** ॥ ६२ ॥

**अस्मन्निद्रापि जीवेशौ चेतनौ स्वप्नगौ सृजेत्।**
**महामाया सृजत्येतावित्याश्चर्यं किमत्र ते ॥ ६३ ॥**

उक्तमर्थं कैमुतिकन्यायेन द्रढयति—**अस्मदिति**॥ ६३॥

**सर्वज्ञत्वादिकं चेशे कल्पयित्वा प्रदर्शयेत्।**
**धर्मिणं कल्पयेद्याऽस्याः को भारो धर्मकल्पने ६४**

ईश्वरस्यापि मायिकत्वे तस्य जीववदसर्वज्ञत्वादिकं स्यादित्याशङ्क्य सर्वज्ञत्वादिकमपि मायैव कल्पयिष्यतीत्याह—**सर्वज्ञत्वेति**। तत्रोपपत्तिमाह—**धर्मिणमिति** ॥ ६४ ॥

**कूटस्थेऽप्यतिशङ्का स्यादिति चेन्माऽतिशङ्क्यतां**
**कूटस्थमायिकत्वे तु प्रमाणं नहि विद्यते ॥ ६५ ॥**

ननु जीवेशयोरिव कूटस्थस्यापि मायिकत्वं प्रसज्येतेति शङ्कते—**कूटस्थ इति**। प्रमाणाभावान्नैवमिति परिहरति—**माऽतिशङ्क्यतामिति** ॥ ६५ ॥

**वस्तुत्वं घोषयन्त्यस्य वेदान्ताः सकला अपि।**
**सपत्नरूपं वस्त्वन्यन्न सहन्तेऽत्र किंचन ॥ ६६ ॥**

कूटस्थस्य वास्तवत्वेऽपि प्रमाणं नोपलभ्यत इत्याशङ्क्य

श्रुतयः सर्वा अपि प्रमाणमित्याह—**वस्तुत्वमिति** । अत्र कूटस्थस्य पारमार्थिकत्वे प्रतिपक्षभूतमन्यद्वस्तु किंचन न सहन्त इत्यर्थः ॥ ६६ ॥

**श्रुत्यर्थं विशदीकुर्मो न तर्काद्वच्मि किंचन ।**
**तेन तार्किकशङ्कानामत्र कोऽवसरो वद ॥ ६७ ॥**

ननु कूटस्थस्य जीवेशयोश्च वास्तवत्वावास्तवत्वसाधने श्रुतय एव पठ्यन्ते न तर्कैः किंचिदपि साध्यते इत्याशङ्क्य मुमुक्षूणां श्रुत्यर्थविशदीकरणाय प्रवृत्तत्वान्न तर्कोपन्यास इत्याह—**श्रुत्यर्थमिति** ॥ ६७ ॥

**तस्मात्कुतर्कं संत्यज्य मुमुक्षुः श्रुतिमाश्रयेत् ।**
**श्रुतौ तु माया जीवेशौ करोतीति प्रदर्शितम् ६८**

ततः किमित्यत आह—**तस्मादिति** । मुमुक्षुणा श्रुत्यर्थः कीदृशोऽनुसंधेय इत्याह—**श्रुतावित्यादिना** । श्रुतिषु जीवेशयोर्मायिकत्वमुक्तम् ॥ ६८ ॥

**ईक्षणादिप्रवेशान्ता सृष्टिरीशकृता भवेत् ।**
**जाग्रदादिविमोक्षान्तः संसारो जीवकर्तृकः ॥६९॥**

ईक्षणादिप्रवेशान्तायाः सृष्टेः ईश्वरकर्तृत्वम्, जाग्रत्स्वप्नसुषुप्तिबन्धमोक्षलक्षणस्य संसारस्य जीवकर्तृत्वम् ॥ ६९ ॥

**असङ्ग एव कूटस्थः सर्वदा नास्य कश्चन ।**
**भवत्यतिशयस्तेन मनस्येवं विचार्यताम् ॥ ७० ॥**

कूटस्थस्यासङ्गत्वादिकं मृतिजन्मादिलक्षणस्य व्यवहारजातस्यासत्त्वं च प्रतिपादितमतो मुमुक्षुरिममर्थं सर्वदा विचारयेदित्यभिप्रायः ॥ ७० ॥

**न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः ।**
**न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता ॥ ७१ ॥**

कूटस्थस्य जन्माद्यतिशयाभावः कुतोऽवगम्यत इत्याशङ्क्य श्रुतिवाक्यादित्यभिप्रेत्य तद्वाक्यं पठति—**न निरोध इति** ॥ ७१ ॥

**अवाङ्मनसगम्यं तं श्रुतिर्बोधयितुं सदा ।**
**जीवमीशं जगद्वापि समाश्रित्य प्रबोधयेत् ॥७२॥**

ननु तर्हि श्रुतिषु तत्र तत्र जीवेश्वरादिस्वरूपप्रतिपादनं किमर्थमित्याशङ्क्य अवाङ्मनसगोचरस्यात्मनोऽवबोधनायेत्याह—**अवाङ्मनसेति** ॥ ७२ ॥

**यया यया भवेत्पुंसां व्युत्पत्तिः प्रत्यगात्मनि ।**
**सा सैव प्रक्रियेह स्यात्साध्वीत्याचार्यभाषितम् ॥**

ननु तत्त्वस्यैकरूपस्य श्रुतिबोध्यत्वे श्रुतिषु विगानं कुतो दृश्यत इत्याशङ्क्य न तत्त्वे विगानमस्ति अपितु तद्बोधनप्रकारे तदपि बोध्यपुरुषचित्तवैषम्यानुसारेण सुरेश्वराचार्यैरुक्तमित्याह—**यया ययेति** ॥ ७३ ॥

**श्रुतितात्पर्यमखिलमबुद्ध्वा भ्राम्यते जडः ।**
**विवेकी त्वखिलं बुद्ध्वा तिष्ठत्यानन्दवारिधौ ॥७४॥**

श्रुत्यर्थस्यैकरूपत्वे तत्प्रतिपादकानामेव कुतो विप्रतिपत्तिरित्याशङ्क्य श्रुतितात्पर्यबोधशून्यानामेव विप्रतिपत्तिर्नतु तद्विदामित्याह—**श्रुतितात्पर्यमिति** ॥ ७४ ॥

**मायामेघो जगन्नीरं वर्षत्वेष यथा तथा ।**
**चिदाकाशस्य नो हानिर्न वा लाभ इति स्थितिः**

तर्हि विवेकिनो निश्चयः कीदृश इत्याकाङ्क्षायामाह—**मायेति** ॥ ७५ ॥

**इमं कूटस्थदीपं योऽनुसंधत्ते निरन्तरम् ।**
**स्वयं कूटस्थरूपेण दीप्यतेऽसौ निरन्तरम् ॥७६॥**

**इति श्रीमत्परमहंसपरिव्राजकाचार्यविद्यारण्यस्वामिविरचितपञ्चदश्यां कूटस्थदीपः समाप्तः ॥**

ग्रन्थाभ्यासफलमाह—**इममिति** ॥ ७६ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीभारतीतीर्थविद्यारण्यमुनिवर्यकिंकरेण रामकृष्णाख्येन विदुषा विरचिता कूटस्थदीपतात्पर्यदीपिका समाप्ता ॥

---

# ध्यानदीपप्रकरणम् ॥ ९ ॥



**संवादिभ्रमवद्ब्रह्मतत्त्वोपास्त्यापि मुच्यते ।**
**उत्तरे तापनीयेऽतः श्रुतोपास्तिरनेकधा ॥ १ ॥**

नत्वा श्रीभारतीतीर्थविद्यारण्यमुनीश्वरौ ।
क्रियते ध्यानदीपस्य व्याख्या संक्षेपतो मया ॥ १ ॥

इह तावद्वेदान्तशास्त्रे नित्यानित्यवस्तुविवेकादिसाधनचतुष्टयसंपन्नस्य सम्यक्श्रवणमनननिदिध्यासनानुष्ठानवतस्तत्त्वंपदार्थविवेचनपूर्वकं महावाक्यार्थापरोक्षज्ञानेन ब्रह्मभावलक्षणो मोक्षो भवतीति प्रतिपादितं, तत्र श्रुतोपनिषत्कस्यापि बुद्धिमान्द्यादिना केनचित् प्रतिबन्धेन वाक्यार्थविषयापरोक्षमित्यनुत्पत्तौ सत्यां तदुत्पादनद्वारा मोक्षफलकोपासनानि दिदर्शयिषुरादौ तावत्सदृष्टान्तं ब्रह्मतत्त्वोपासनयापि मोक्षो भवतीति प्रतिजानीते—**संवादीति** । यथा संवादिभ्रमेण प्रवृत्तस्याभिप्रेतार्थलाभो भवति एवं ब्रह्मतत्त्वोपासनयाप्यभिलषितब्रह्मभावलक्षणो मोक्षो भवतीत्यर्थः । तत्र किं प्रमाणमित्यत आह—**उत्तर इति** । यत उपासनयापि मोक्षोऽस्त्यतः तापनीयोपनिषद्यनेकप्रकारेण ब्रह्मतत्त्वोपासना श्रुता उक्तेत्यर्थः ॥ १ ॥

**मणिप्रदीपप्रभयोर्मणिबुद्ध्याभिधावतोः ।**
**मिथ्याज्ञानविशेषेऽपि विशेषोऽर्थक्रियां प्रति ॥२॥**

संवादिभ्रमवदित्युक्तं प्रपञ्चयितुं संवादिभ्रमप्रतिपादकवार्तिकं पठति—**मणिप्रदीपेति** । मणिश्च प्रदीपश्च मणिप्रदीपौ तयोः प्रभे मणिप्रदीपप्रभे तयोरिति विग्रहः । मणिप्रभायां दीपप्रभायां च या मणिबुद्धिः सा मिथ्याज्ञानमेव अतस्मिंस्तद्बुद्धित्वाद्, अथापि मणिप्रभायां च या मणिबुद्धिः सार्थक्रियाकारिणी मणिबुद्ध्याभिधावतः पुरुषस्य मणिलाभो भवति इतरस्य तु नास्तीत्यर्थक्रियायां वैषम्यमस्तीत्यर्थः ॥ २ ॥

**दीपोऽपवरकस्यान्तर्वर्तते तत्प्रभा बहिः ।**
**दृश्यते द्वार्यथान्यत्र तद्वद्दृष्टा मणेः प्रभा ॥ ३ ॥**

वार्तिकं व्याचष्टे—**दीपोऽपवरकस्यान्त**रित्यादिना श्लोकत्रयेण । कस्मिंश्चिन्मन्दिरे अपवरकस्यान्तर्दीपस्तिष्ठति तस्य प्रभा बहिर्द्वारप्रदेशे रत्नमिव वर्तुलोपलभ्यते तथान्यस्मिन्मन्दिरे अपवरकस्यान्तःस्थितस्य रत्नस्य प्रभा बहिर्द्वारप्रदेशे दीपप्रभेव रत्नसमानोपलभ्यते ॥ ३ ॥

**दूरे प्रभाद्वयं दृष्ट्वा मणिबुद्ध्याभिधावतोः ।**
**प्रभायां मणिबुद्धिस्तु मिथ्याज्ञानं द्वयोरपि ॥४॥**

**दूर इति** । तथाविधं प्रभाद्वयं दूरतो दृष्ट्वा अयं मणि-

रयं मणिरिति बुद्ध्या द्वौ पुरुषावभिधावनं कुरुतः तयो-र्द्वयोरपि प्रभाविषये जायमानं मणिज्ञानं भ्रान्तमेव ॥ ४ ॥

**न लभ्यते मणिर्दीपप्रभां प्रत्यभिधावता ।**
**प्रभायां धावतावश्यं लभ्येतैव मणिर्मणेः ॥ ५ ॥**

अथापि दीपप्रभायां मणिबुद्धिं कृत्वा धावता पुरुषेण मणिर्नोपलभ्यते, मणेः प्रभायां मणिबुद्ध्या धावता मणि-र्लभ्येतैव ॥ ५ ॥

**दीपप्रभामणिभ्रान्तिर्विसंवादिभ्रमः स्मृतः ।**
**मणिप्रभामणिभ्रान्तिः संवादिभ्रम उच्यते ॥ ६ ॥**

भवत्वेवं वार्तिकार्थः प्रकृते किमायातमित्यत आह—**दीपप्रभेति** । या दीपप्रभायां मणिभ्रान्तिरस्ति सः विसं-वादिभ्रम इति स्मृतो विद्वद्भिर्मणिलाभलक्षणार्थक्रियारहित-त्वात् । या मणिप्रभायां मणिबुद्धिरस्ति सा तु मणिलाभ-लक्षणार्थक्रियावत्त्वात्संवादिभ्रम इत्यर्थः ॥ ६ ॥

**बाष्पं धूमतया बुद्ध्वा तत्राङ्गारानुमानतः ।**
**वह्निर्यदृच्छया लब्धः स संवादिभ्रमो मतः ॥७॥**

एवं प्रत्यक्षविषये संवादिभ्रमं दर्शयित्वानुमानविषयेऽपि तं दर्शयति—**बाष्पमिति** । क्वचित्प्रदेशे स्थितं बाष्पं धूमत्वेन निश्चित्य तन्मूलप्रदेशे अयं प्रदेशः अग्निमान् धूमवत्त्वादित्यनुमाय प्रवृत्तेन पुरुषेण दैवगत्या यद्यग्निस्त-त्रोपलभ्येत तदा बाष्पविषयं धूमज्ञानं संवादिभ्रमो मतः॥७॥

**गोदावर्युदकं गङ्गोदकं मत्वा विशुद्धये ।**
**संप्रोक्ष्य शुद्धिमाप्नोति स संवादिभ्रमो मतः ॥८॥**

आगमविषयेऽपि तं दर्शयति—**गोदावर्युदकमिति** । गोदावर्युदकस्यापि विशुद्धिहेतुत्वमागमसिद्धमतस्तत्प्रोक्षणादपि विशुद्धिरस्त्येव अथापि गोदावर्युदके या गङ्गोदकबुद्धिः सा भ्रान्तिरेव ॥ ८ ॥

**ज्वरेणाप्तः संनिपातं भ्रान्त्या नारायणं स्मरन् ।**
**मृतः स्वर्गमवाप्नोति स संवादिभ्रमो मतः ॥ ९॥**

उदाहरणान्तरमाह—**ज्वरेणाप्त इति** । ज्वरेण संनिपातं प्राप्तः पुरुषः इदं नारायणस्मरणं मम स्वर्गसाधनमिति ज्ञानमन्तरेणापि संनिपातप्रयुक्तभ्रमवशात् साधारणपुरुषतया चैद्यादिवन्नारायणं स्मरन् मृतः स्वर्गमवाप्नोत्येव 'हरिर्हरति पापानि दुष्टचित्तैरपि स्मृतः' 'आक्रुश्य पुत्रमघवान्यदजामिलोऽपि नारायणेति म्रियमाण इयाय मुक्तिम्' इत्यादिपुराणवचनेभ्यः । अत्रापि नारायणनाम्नः पुत्रनामत्वज्ञानं भ्रान्तिरेव ॥ ९ ॥

**प्रत्यक्षस्यानुमानस्य तथा शास्त्रस्य गोचरे ।**
**उक्तन्यायेन संवादिभ्रमाः सन्ति हि कोटिशः १०**

एवं त्रिविधसंवादिभ्रमोदाहरणेन सिद्धमर्थमाह—**प्रत्यक्षस्येति** ॥ १० ॥

**अन्यथा मृत्तिकादारुशिलाः स्युर्देवताः कथम् ।**
**अग्नित्वादिधियोपास्याः कथं वा योषिदादयः ११**

विपक्षे बाधकप्रदर्शनेनोक्तमर्थं द्रढयति—**अन्यथेति** । अन्यथा संवादिभ्रमाभावे मृदादयः फलसिद्धये देवतात्वेन पूज्या न भवेयुः स्वतो देवतात्वाभावादित्यर्थः । बाधकान्तरमाह—**अग्नित्वादिति** । पञ्चाग्निविद्यायां 'योषा वाव गौतमाग्निः पुरुषो वाव गौतमाग्निः पृथिवी वाव गौतमाग्निः पर्जन्यो वाव गौतमाग्निरसौ वाव द्युलोको गौतमाग्निः' इत्यादिवाक्यैर्योषित्पुरुषपृथिवीपर्जन्यद्युलोकानामग्नित्वेनोपासनं ब्रह्मलोकावाप्तिफलकं न भवेदित्यर्थः । आदिपदेन 'मनो ब्रह्मेत्युपासीत' 'आदित्यो ब्रह्मेत्यादेशः' इत्येवमादयो गृह्यन्ते ॥ ११ ॥

**अयथावस्तुविज्ञानात्फलं लभ्यत ईप्सितम् ।**
**काकतालीयतः सोयं संवादिभ्रम उच्यते ॥ १२॥**

इदानीं बहुभिर्ग्रन्थैरुपपादितं संवादिभ्रमं बुद्धिसौकर्याय संक्षिप्य दर्शयति—**अयथावस्त्विति** । विहिताद्विहिताद्वा यस्मादयथावस्तुविज्ञानादीप्सितमभिलषितं फलं काकतालीयन्यायतो दैवगत्या लभ्यते सोऽयं संवादिभ्रम इत्यर्थः ॥ १२ ॥

**स्वयंभ्रमोऽपि संवादी यथा सम्यक्फलप्रदः ।**
**ब्रह्मतत्त्वोपासनापि तथा मुक्तिफलप्रदा ॥ १३ ॥**

ननु ब्रह्मोपासनस्यायथावस्तुविषयस्य कथं सम्यग्ज्ञानसाध्यं मुक्तिफलप्रदत्वमित्याशङ्क्य संवादिभ्रमवदेवेत्याह—स्वयंभ्रम इति ॥ १३ ॥

**वेदान्तेभ्यो ब्रह्मतत्त्वमखण्डैकरसात्मकम् ।**
**परोक्षमवगम्यैतदहमस्मीत्युपासते ॥ १४ ॥**

ननु ब्रह्मत्वं ज्ञात्वोपासनं क्रियतेऽज्ञात्वा वा, आद्ये उपासनावैयर्थ्यं मोक्षसाधनस्य ज्ञानस्यैव विद्यमानत्वात्, द्वितीये विषयापरिज्ञानादुपासनमेव न घटत इत्याशङ्क्याह—**वेदान्तेभ्य इति** । अयमभिप्रायः—ब्रह्मात्मैकत्वापरोक्षज्ञानस्य मोक्षसाधनस्यानुत्पन्नत्वान्नोपासनावैयर्थ्यं शास्त्रात्परोक्षतयावगतत्वात् ब्रह्मण उपासनाविषयत्वमिति ॥ १४ ॥

**प्रत्यग्व्यक्तिमनुल्लिख्य शास्त्राद्विष्णवादिमूर्तिवत् ।**
**अस्ति ब्रह्मेति सामान्यज्ञानमत्र परोक्षधीः ॥ १५ ॥**

उपास्यब्रह्मतत्त्वगोचरस्य परोक्षज्ञानस्य किं रूपमित्याकाङ्क्षायामाह—**प्रत्यगिति** । प्रत्यग्व्यक्तिं बुद्ध्यादिसाक्षिणमानन्दात्मानमनुल्लिख्याविषयीकृत्य शास्त्रात् सत्यज्ञानादिवाक्यजाताद् ब्रह्मास्तीत्येवं सामान्याकारेण जायमानं ज्ञानमत्रास्यामुपासनायां परोक्षधीः परोक्षज्ञानं विवक्षितमित्यर्थः । तत्र दृष्टान्तः—**विष्णवादीति** । विष्ण्वादिमूर्तिप्रतिपादकशास्त्रजन्यज्ञानवदित्यर्थः ॥ १५ ॥

**चतुर्भुजाद्यवगतावपि मूर्तिमनुल्लिखन् ।**
**अक्षैः परोक्षज्ञान्येव न तदा विष्णुमीक्षते ॥ १६ ॥**

ननु शास्त्रेण विष्ण्वादिमूर्तेश्चतुर्भुजत्वादिविशेषप्रतीतेस्तज्ज्ञानस्यापि कुतः परोक्षत्वमित्याशङ्क्याह—**चतुर्भुजादीति** । शास्त्रेण चतुर्भुजत्वादिविशेषप्रतीतावपि चक्षुरादिभिर्विष्ण्वादिमूर्तिमविषयीकुर्वन् पुरुषः परोक्षज्ञान्येव । तत्रोपपत्तिमाह—**न तदेति** । तदोपासनाकाले विष्णुमुपास्यं नेक्षते । नेन्द्रियैर्विषयीकरोतीत्यर्थः ॥ १६ ॥

**परोक्षत्वापराधेन भवेन्नातत्त्ववेदनम् ।**
**प्रमाणेनैव शास्त्रेण सत्त्वमूर्तेर्विभासनात् ॥ १७ ॥**

ननु विष्ण्वादिगोचरज्ञानस्य व्यक्त्युल्लेखित्वाभावाद् भ्रमत्वमित्याशङ्क्य प्रमाणेन जनितत्वान्न भ्रमत्वमित्याह—**परोक्षत्वेति** । परोक्षज्ञानत्वं भ्रान्तिज्ञानत्वे कारणं न भवति किंतु विषयासत्यत्वम्, इह तु प्रमाणभूतेन शास्त्रेणैव यथार्थभूताया विष्ण्वादिमूर्तेरवभासनान्न भ्रमत्वमित्यर्थः ॥ १७ ॥

**सच्चिदानन्दरूपस्य शास्त्राज्ज्ञानेऽप्यनुल्लिखन् ।**
**प्रत्यञ्चं साक्षिणं तत्तु ब्रह्म साक्षान्न वीक्षते ॥ १८ ॥**

ननु सच्चिदानन्दव्यक्त्युल्लेखिनो ब्रह्मतत्त्वज्ञानस्य शास्त्रजन्यस्यापि कुतः परोक्षतेत्याशङ्क्य अपरोक्षत्वप्रयोजकप्रत्यक्त्वोल्लेखाभावादित्याह—**सच्चिदानन्देति** । 'सत्यं ज्ञान-

मनन्तं ब्रह्म', 'नित्यः शुद्धो बुद्धः सत्यो मुक्तो निरञ्जनः', 'सद्धीदं सर्वं तत्सत्' इत्यादिशास्त्रात्सच्चिदानन्दरूपस्य ब्रह्मणो भानेऽपि प्रत्यञ्चं साक्षिणमनुल्लिखन् तस्य ब्रह्मणः प्रत्यगात्मरूपत्वमजानानस्तद्ब्रह्म साक्षान्न वीक्षते नैव पश्यति ॥ १८ ॥

**शास्त्रोक्तेनैव मार्गेण सच्चिदानन्दनिश्चयात् ।**
**परोक्षमपि तज्ज्ञानं तत्त्वज्ञानं न तु भ्रमः ॥ १९ ॥**

कथं तर्हि तथाविधब्रह्मगोचरस्य ज्ञानस्य तत्त्वज्ञानत्वमित्याशङ्क्य आगमप्रमाणजन्यत्वादित्याह—**शास्त्रेति** । तज्ज्ञानं परोक्षमपि शास्त्रोक्तेनैव प्रकारेण ब्रह्मणः सच्चिदानन्दरूपनिश्चायकत्वात् सम्यग्ज्ञानमेव न भ्रम इत्यर्थः ॥ १९ ॥

**ब्रह्म यद्यपि शास्त्रेषु प्रत्यक्त्वेनैव वर्णितम् ।**
**महावाक्यैस्तथाप्येतद्दुर्बोधमविचारिणः ॥ २० ॥**

ननु सत्यज्ञानादिवाक्यैर्ब्रह्मणः सच्चिदानन्दरूपत्वमिव तत्त्वमस्यादिवाक्यैः प्रत्यग्रूपत्वमपि तस्य बोध्यत एव, अतः शास्त्रजन्यस्यापि ज्ञानस्य प्रत्यग्व्यक्त्युल्लेखित्वादपरोक्षमेवेत्याशङ्क्याह—**ब्रह्मेति** । यद्यपि वेदान्तेषु महावाक्यैर्ब्रह्म प्रत्यगात्मत्वेनैवोपदिष्टं तथाप्येतत्प्रत्यग्रूपत्वमन्वयव्यतिरेकाभ्यां तत्त्वं पदार्थविवेकशून्यस्य दुर्बोधं बोद्धुमशक्यमतः केवलाद्वाक्यान्नापरोक्षज्ञानमुत्पद्यत इत्यर्थः ॥ २० ॥

**देहाद्यात्मत्वविभ्रान्तौ जाग्रत्यां न हठात्पुमान्।**
**ब्रह्मात्मत्वेन विज्ञातुं क्षमते मन्दधीत्वतः ॥ २१ ॥**

ननु सम्यग्ज्ञानस्य प्रमाणवस्तुपरतन्त्रत्वात्प्रमाणस्य च तत्त्वमस्यादिवाक्यरूपस्य सद्भावाद्वस्तुनश्च ब्रह्मात्मैक्यलक्षणस्य विद्यमानत्वात्कुतो विचारमन्तरेण दुर्बोधत्वमित्याशङ्क्याह—**देहादीति** । ब्रह्मात्मैकत्वापरोक्षज्ञानविरोधिनो देहेन्द्रियादिष्वात्मत्वभ्रमस्य विचारनिवर्त्यस्य सद्भावात्तन्निवृत्तये विचारोऽपेक्ष्यत इत्यर्थः ॥ २१ ॥

**ब्रह्ममात्रं सुविज्ञेयं श्रद्धालोः शास्त्रदर्शिनः।**
**अपरोक्षद्वैतबुद्धिः परोक्षाद्वैतबुद्ध्यनुत् ॥ २२ ॥**

ननु तर्हि देहेन्द्रियादिगोचरस्य द्वैतभ्रमस्य सद्भावादद्वितीयब्रह्मगोचरं परोक्षज्ञानमपि नोदीयादित्याशङ्क्य अपरोक्षद्वैतभ्रमस्य परोक्षाद्वैतज्ञानाविरोधित्वाच्छ्रद्धावतः पुंसः शास्त्रात्परोक्षज्ञानमुत्पद्यत एवेत्याह—**ब्रह्ममात्रमिति** । अपरोक्षद्वैतबुद्धिर्यतः परोक्षाद्वैतबुद्ध्यनुत्, अतो ब्रह्ममात्रं सुविज्ञेयमिति योजना ॥ २२ ॥

**अपरोक्षशिलाबुद्धिर्न परोक्षेशतां नुदेत्।**
**प्रतिमादिषु विष्णुत्वे को वा विप्रतिपद्यते ॥२३॥**

अपरोक्षभ्रमस्य परोक्षसम्यग्ज्ञानाविरोधित्वे दृष्टान्तमाह—**अपरोक्षेति** । विरोधाभावमेवोदाहृत्य दर्शयति—**प्रतिमादिष्विति** ॥ २३ ॥

**अश्रद्धालोरविश्वासो नोदाहरणमर्हति ।**
**श्रद्धालोरेव सर्वत्र वैदिकेष्वधिकारतः ॥ २४ ॥**

केचन विप्रतिपद्यमाना उपलभ्यन्ते इत्याशङ्क्याह— **अश्रद्धालोरिति** । कुत इत्यत आह— **श्रद्धालोरेवेति** । सर्वेषु वेदोक्तानुष्ठानेषु श्रद्धालोरेव श्रद्धावत एवाधिकारित्वा-दित्यर्थः ॥ २४ ॥

**सकृदाप्तोपदेशेन परोक्षज्ञानमुद्भवेत् ।**
**विष्णुमूर्त्युपदेशो हि न मीमांसामपेक्षते ॥ २५ ॥**

एतावता परोक्षज्ञाने किमायातमित्यत आह— **सकृदाप्त इति** । उक्तमर्थं लोकानुभवेन द्रढयति— **विष्णुमूर्तीति** २५

**कर्मोपास्ती विचार्येते अनुष्ठेयाविनिर्णयात् ।**
**बहुशाखाविप्रकीर्णं निर्णेतुं कः प्रभुर्नरः ॥ २६ ॥**

ननु तर्हि शास्त्रेषु कुतो विचाराः क्रियन्त इत्याशङ्क्य अनुष्ठेययोः कर्मोपासनयोः संदेहसंभवात्तन्निर्णयाय विचाराः क्रियन्त इत्याह— **कर्मोपास्ती इति** । संदेहसंभवमेवोप-पादयति— **बहुशाखेति** । अनेकासु शाखासु तत्र तत्र चोदितं कर्म उपासनं वा एकत्र समाहृत्य निर्णेतुमस्मदादि-र्नरः कः प्रभुः समर्थः । न कोऽपीत्यर्थः ॥ २६ ॥

**निर्णीतोऽर्थः कल्पसूत्रैर्ग्रथितस्तावतास्तिकः ।**
**विचारमन्तरेणापि शक्तोऽनुष्ठातुमञ्जसा ॥ २७ ॥**

नमु तर्ह्यननुष्ठेयत्वमेव कर्मोपासनयोः प्राप्तमित्याशङ्क्याह —**निर्णीत इति**। जैमिन्यादिभिः पूर्वाचार्यैर्निश्चितोऽर्थः अनुष्ठानप्रकारः कल्पसूत्रैः संगृहीतोऽस्ति तावता तैर्ग्रथितत्वेनैव तेषु विश्वासवान्पुरुषः विचारं विनापि कर्म सम्यगनुष्ठातुं शक्नोत्येव ॥ २७ ॥

**उपास्तीनामनुष्ठानमार्षग्रन्थेषु वर्णितम्।**
**विचाराक्षममर्त्यांश्च तच्छ्रुत्वोपासते गुरोः ॥२८॥**

ननु तत्रोपासनाविचाराभावात्तदनुष्ठानं न संभवेदित्याशङ्क्याह—**उपास्तीनामिति**। आर्षग्रन्थेषु ब्रह्मवासिष्ठादिमन्त्रकल्पेषूपासनाप्रकारो वर्णितः। ततो विचारासमर्था मनुष्याः कल्पेषूक्तं तदुपासनं गुरुमुखादवगत्यानुतिष्ठन्तीति भावः २८

**वेदवाक्यानि निर्णेतुमिच्छन्मीमांसतां जनः।**
**आप्तोपदेशमात्रेण ह्यनुष्ठानं हि संभवेत् ॥ २९ ॥**

ननु तर्हि इदानींतनैरपि ग्रन्थकर्तृभिर्वेदवाक्यविचारः कुतः क्रियत इत्याशङ्क्य स्वस्वबुद्धिपरितोषायैव क्रियते नानुष्ठानसिद्धय इत्याह—**वेदेति** ॥ २९ ॥

**ब्रह्मसाक्षात्कृतिस्त्वेवं विचारेण विना नृणाम्।**
**आप्तोपदेशमात्रेण न संभवति कुत्रचित् ॥ ३० ॥**

ननु ब्रह्मोपासनवद्ब्रह्मसाक्षात्कारस्याप्युपदेशमात्रादेव सिद्धिः किं न स्यादित्याशङ्क्याह—**ब्रह्मेति** ॥ ३० ॥

**परोक्षज्ञानमश्रद्धा प्रतिबध्नाति नेतरत् ।**
**अविचारोऽपरोक्षस्य ज्ञानस्य प्रतिबन्धकः ॥ ३१ ॥**

आप्तोपदेशमात्रेणोपासनानुष्ठानोपयोगि परोक्षज्ञानमुत्पद्यते अपरोक्षज्ञानं तु विचारमन्तरेण न जायत इत्युक्तं तत्र कारणमाह—**परोक्षेति** । यतोऽविश्वास एव परोक्षज्ञानं प्रतिबध्नाति नाविचारोऽतस्तन्निवृत्तौ सकृदुपदेशादेव परोक्षज्ञानजन्मोपपद्यते अविचारप्रतिबन्धस्य, अपरोक्षज्ञानस्य तु विचारद्वारा तन्निवृत्तिमन्तरेणोत्पत्तिर्न संभवति, अतो विचारः कर्तव्य इति भावः ॥ ३१ ॥

**विचार्याप्यापरोक्ष्येण ब्रह्मात्मानं न वेत्ति चेत् ।**
**आपरोक्ष्यावसानत्वाद्भूयो भूयो विचारयेत्॥३२॥**

ननु विचारे कृतेऽपि यदापरोक्षज्ञानं न जायते तदा किं कर्तव्यमित्यत आह—**विचार्यापीति** । तत्त्वंपदार्थौ सम्यग्विचार्यापि वाक्यार्थं ब्रह्मात्मैकत्वमपरोक्षतया न जानातीति चेत्तदापि पुनःपुनर्विचार एव कर्तव्योऽपरोक्षज्ञानहेतोरन्यस्याभावादिति भावः ॥ ३२ ॥

**विचारयन्नामरणं नैवात्मानं लभेत चेत् ।**
**जन्मान्तरे लभेतैव प्रतिबन्धक्षये सति ॥ ३३ ॥**

ननु भूयो भूयो विचारेणापि इह साक्षात्कारानुदये सति विचारो व्यर्थः स्यादित्याशङ्क्याह—**विचारयन्निति** ॥ ३३ ॥

**इह वाऽमुत्र वा विद्येत्येवं सूत्रकृतोदितम् ।**
**शृण्वन्तोऽप्यत्र बहवो यन्न विद्युरिति श्रुतिः ३४**

नन्विदं कुतोऽवगतमित्याशङ्क्य ब्रह्मसूत्रकृता व्यासेन 'ऐहिकमप्यप्रस्तुतप्रतिबन्धे तद्दर्शनात्' इत्यस्मिन्सूत्रेऽभिधानादित्याह—**इह वाऽमुत्रेति**। सति प्रतिबन्धे इह जन्मनि ज्ञानानुत्पत्तौ श्रुतिं दर्शयति—**शृण्वन्त इति** ॥ ३४ ॥

**गर्भ एव शयानः सन्वामदेवोऽवबुद्धवान् ।**
**पूर्वाभ्यस्तविचारेण यद्वदध्ययनादिषु ॥ ३५ ॥**

इह जन्मनि श्रवणादिकर्तुः जन्मान्तरेऽपरोक्षज्ञानं भवतीत्यत्रापि 'गर्भे नु सन्नन्वेषाम वेदमहं देवानां जनिमानि विश्वा' इत्यादिकां श्रुतिमर्थतः पठति—**गर्भे इति**। इह जन्मन्यनुत्पन्नस्य ज्ञानस्य कालान्तरोत्पत्तौ दृष्टान्तमाह—**यद्वदिति** ॥ ३५ ॥

**बहुवारमधीतेऽपि तदा नायाति चेत्पुनः ।**
**दिनान्तरेऽनधीत्यैव पूर्वाधीतं स्मरेत्पुमान् ॥३६॥**

दृष्टान्तं विवृणोति—**बहुवारमिति** ॥ ३६ ॥

**कालेन परिपच्यन्ते कृषिगर्भादयो यथा ।**
**तद्वदात्मविचारोऽपि शनैः कालेन पच्यते ॥३७॥**

आदिशब्देन परिगृहीतानि दृष्टान्तान्तराण्याह—**कालेनेति**। दार्ष्टान्तिके योजयति—**तद्वदिति** ॥ ३७ ॥

**पुनःपुनर्विचारेऽपि त्रिविधप्रतिबन्धतः ।**
**न वेत्ति तत्त्वमित्येतद्वार्तिके सम्यगीरितम् ॥३८॥**

बहुवारं विचारितेऽपि तत्त्वे प्रतिबन्धबलात्साक्षात्कारो न जायत इत्येतद्वार्तिककारैरपि निरूपितमित्याह—**पुनः पुनरिति** ॥ ३८ ॥

**कुतस्तज्ज्ञानमिति चेत्तद्धि बन्धपरिक्षयात् ।**
**असावपि च भूतो वा भावी वा वर्ततेऽथ वा ३९**

तान्येव वार्तिकान्युदाहरति—**कुतस्तज्ज्ञानमित्यादिना** भरतस्य त्रिजन्मभिरित्यन्तेन । तत्र तावत्पूर्वमनुत्पन्नस्य ज्ञानस्येदानीमुत्पत्तौ कारणं पृच्छति—**कुत इति** । उत्तरमाह—**तद्धि बन्धेति** । बन्धः प्रतिबन्धस्तस्य परिक्षयादित्यर्थः । सोऽपि प्रतिबन्धो भूतो भावी वर्तमानश्चेति त्रिविध इत्याह—**असाविति** ॥ ३९ ॥

**अधीतवेदवेदार्थोऽप्यत एव न मुच्यते ।**
**हिरण्यनिधिदृष्टान्तादिदमेव हि दर्शितम् ॥ ४० ॥**

भवत्वेवं त्रिविधप्रतिबन्धस्ततः किमित्यत आह— **अधीतेति** । अतएव । प्रतिबन्धसद्भावादेवेत्यर्थः । सति प्रतिबन्धे ज्ञानं नोदेतीत्येतत् 'तद्यथा हिरण्यनिधिं निहितमक्षेत्रज्ञा उपर्युपरि संचरन्तो न विन्देयुरेवमेवेमाः सर्वाः प्रजा अहरहर्ब्रह्मलोकं गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्त्यनृतेन

हि प्रत्यूढाः' इत्यनया श्रुत्या प्रदर्शितमित्याह—**हिरण्येति** ॥ ४० ॥

**अतीतेनापि महिषीस्नेहेन प्रतिबन्धतः ।**
**भिक्षुस्तत्त्वं न वेदेति गाथा लोके प्रगीयते ॥ ४१ ॥**

नन्वतीतस्य प्रतिबन्धकत्वं न दृष्टमित्याशङ्क्याह—**अतीतेनेति** । अयमर्थः—कश्चिद्यतिः पूर्वं गार्हस्थ्यदशायां कस्यांचिन्महिष्यां स्नेहं कृत्वा पश्चात्संन्यासानन्तरं श्रवणे प्रवृत्तोऽपि तेनैव स्नेहेन जनितात्प्रतिबन्धात्तत्त्वं गुरुणोपदिष्टमपि न ज्ञातवानित्येवंविधा गाथा लोके प्रगीयते न पुराणादिषु पठ्यत इत्यर्थः ॥ ४१ ॥

**अनुसृत्य गुरुः स्नेहं महिष्यां तत्त्वमुक्तवान् ।**
**ततो यथावद्वेदैष प्रतिबन्धस्य संक्षयात् ॥ ४२ ॥**

तर्हि तथाविधस्य तस्य कथं ज्ञानोत्पत्तिरित्यत आह—**अनुसृत्येति** । गुरुस्तस्य तत्त्वोपदेष्टा तदीयमहिषीस्नेहमनुसृत्य तस्यामेव महिष्यां तत्त्वं तन्महिष्युपाधिकं ब्रह्मोक्तवान् । ततः सोऽपि महिषीस्नेहलक्षणप्रतिबन्धकापगमेन गुरूपदिष्टं तत्त्वं यथावच्छास्त्रोक्तप्रकारेणैव ज्ञातवानित्यर्थः ॥ ४२ ॥

**प्रतिबन्धो वर्तमनो विषयासक्तिलक्षणः ।**
**प्रज्ञामान्द्यं कुतर्कश्च विपर्ययदुराग्रहः ॥ ४३ ॥**

एवमतीतप्रतिबन्धं प्रदर्श्य वर्तमानं दर्शयति—**प्रतिबन्ध इति**। वर्तमानः प्रतिबन्धश्चित्तस्य विषयासक्तिरूपः एकः प्रज्ञामान्द्यं बुद्धेस्तैक्ष्ण्याभावः कुतर्कश्च शुष्कतार्किकत्वेन श्रुत्यर्थस्यान्यथोहनं विपर्ययदुराग्रहः विपर्यये आत्मनः कर्तृत्वादिधर्मयुक्तत्वज्ञानलक्षणो दुराग्रहो युक्तिरहितोऽभिनिवेशः। एतेषामन्यतमस्यापि सत्त्वे ज्ञानं नोदेतीत्यर्थः॥४३

**शमाद्यैः श्रवणाद्यैश्च तत्र तत्रोचितैः क्षयम्।**
**नीतेऽस्मिन्प्रतिबन्धेऽतः स्वस्य ब्रह्मत्वमश्नुते॥४४॥**

अस्यापि प्रतिबन्धस्य केन निवृत्तिरित्यत आह—**शमाद्यैरिति**। शमादयः 'शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वा' इति श्रुत्युक्ताः श्रवणादयः 'श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इति श्रुत्यभिहिताः, एतैः साधनैस्तत्र तत्र तस्य तस्य प्रतिबन्धस्य निवर्तने उचितैर्योग्यैस्तस्मिंस्तस्मिन्प्रतिबन्धे क्षयं नीते सति विनाशिते सति, अतः प्रतिबन्धापगमादेव स्वस्य प्रत्यगात्मनो ब्रह्मत्वं प्राप्नोतीत्यर्थः॥४४

**आगामिप्रतिबन्धश्च वामदेवे समीरितः।**
**एकेन जन्मना क्षीणो भरतस्य त्रिजन्मभिः॥४५॥**

इदानीं भाविप्रतिबन्धं दर्शयति—**आगामीति**। आगामिप्रतिबन्धो जन्मान्तरहेतुः प्रारब्धशेष इत्यर्थः। तस्य च भोगमन्तरेण निवृत्त्यभावात्तन्निवृत्तौ कालनियमो

नास्तीत्याह—**एकेनेति** । स च एकेन जन्मना क्षीणो वामदेवस्येति शेषः । भरतस्य त्रिजन्मभिः क्षीण इत्यनुषज्यते ॥ ४५ ॥

**योगभ्रष्टस्य गीतायामतीते बहुजन्मनि ।**
**प्रतिबन्धक्षयः प्रोक्तो न विचारोऽप्यनर्थकः ॥४६॥**

नन्वेकेन त्रिजन्मभिरिति नियतकालत्वं भवतैवोच्यत इत्याशङ्क्याह—**योगेति** । योगभ्रष्टः तत्त्वसाक्षात्कारपर्यन्तं विचाररहित इत्यर्थः । तर्हि तत्त्वविचारो निष्फलः स्यादित्याशङ्क्याह—**न विचारोऽपीति** । प्रतिबन्धनिवृत्त्यनन्तरमेवापरोक्षज्ञानलक्षणफलसद्भावादिति भावः ॥४६॥

**प्राप्य पुण्यकृतां लोकानात्मतत्त्वविचारतः ।**
**शुचीनां श्रीमतां गेहे साभिलाषोऽभिजायते ४७**

गीतायां प्रतिपादितमर्थं दर्शयति 'प्राप्येत्यादिना ततो याति परां गतिम्' इत्यन्तेन—**प्राप्येति** । योगभ्रष्ट आत्मतत्त्वविचारबलादेव पुण्यकारिणां लोकान्स्वर्गविशेषान्प्राप्य तत्र बहुकालं सुखमनुभूय तद्भोगावसाने साभिलाषश्चेदस्मिंल्लोके शुचीनां मातृतः पितृतः शुद्धानां श्रीमतां कुलेऽभिजायते ॥ ४७ ॥

**अथवा योगिनामेव कुले भवति धीमताम् ।**
**निःस्पृहो ब्रह्मतत्त्वस्य विचारात्तद्धि दुर्लभम् ॥४८॥**

पक्षान्तरमाह—**अथवेति**। निःस्पृहः स्वयमतिविरक्तश्चेद्ब्रह्मतत्त्वविचारादेव धीमतामात्मतत्त्वनीश्चयविचारवतां योगिनां चित्तैकाग्य्रवतां कुले भवति। जायत इत्यर्थः। पूर्वस्मात्पक्षात्को विशेष इत्याह—**तद्धीति**। हि यस्मात्कारणात्तद्योगिकुले जन्म दुर्लभम्। अल्पपुण्येनालभ्यमित्यर्थः॥ ४८॥

**तत्र तं बुद्धिसंयोगं लभते पौर्वदेहिकम्।**
**यतते च ततो भूयस्तस्मादेतद्धि दुर्लभम्॥ ४९॥**

तस्य दुर्लभत्वमुपपादयति—**तत्रेति**। हि यस्मात्कारणात् तत्र तस्मिञ्जन्मनि पौर्वदेहिकं पूर्वदेहभवं तं बुद्धिसंयोगं तत्त्वविचारगोचरबुद्धिसंबन्धं शीघ्रं लभते प्राप्नोति। न केवलं बुद्धिसंबन्धमात्रलाभः किंतु ततः पूर्वस्मात्प्रयत्नाद्भूयो यतते चाधिकं प्रयत्नं करोति तस्मादेतज्जन्म दुर्लभमित्यर्थः॥ ४९॥

**पूर्वाभ्यासेन तेनैव ह्रियते ह्यवशोऽपि सः।**
**अनेकजन्मसंसिद्धस्ततो याति परां गतिम्॥५०॥**

भूयोऽभ्यासे कारणमाह—**पूर्वेति**। योगभ्रष्टस्तेन पूर्वाभ्यासेनैवावशोऽपि अस्वाधीनोऽपि ह्रियते आकृष्यते। एवमनेकेषु जन्मसु कृतेन प्रयत्नेन संसिद्धस्तत्त्वज्ञानसंपन्नस्ततस्तस्मात्तत्त्वज्ञानात्परां गतिं मुक्तिं याति प्राप्नोतीत्यर्थः॥५०॥

**ब्रह्मलोकाभिवाञ्छायां सम्यक्सत्यां निरुध्य ताम्।**
**विचारयेद्य आत्मानं न तु साक्षात्करोत्ययम् ५१**

आगामिप्रतिबन्धान्तरं दर्शयति—**ब्रह्मलोकेति** । ब्रह्मलोकप्राप्तीच्छायां दृढायां सत्यां तां निरुध्य य आत्मानं विचारयेत्तस्य साक्षात्कारो नैव जायत इत्यर्थः ॥ ५१ ॥

**वेदान्तविज्ञानसुनिश्चितार्था इति शास्त्रतः ।**
**ब्रह्मलोके स कल्पान्ते ब्रह्मणा सह मुच्यते ॥५२॥**

ननु तर्हि तस्य कदापि मुक्तिर्न स्यादित्याशङ्क्याह—**वेदान्तेति** । 'वेदान्तविज्ञानसुनिश्चितार्थाः संन्यासयोगाद्यतयः शुद्धसत्त्वाः । ते ब्रह्मलोके तु परान्तकाले परामृताः परिमुच्यन्ति सर्वे ॥' 'ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसंचरे । परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम् ॥' इत्यादिशास्त्रवशाद्ब्रह्मलोकप्राप्त्यनन्तरं तत्त्वं साक्षात्कृत्य ब्रह्मणा सह मुक्तिर्भविष्यतीत्यर्थः ॥ ५२ ॥

**केषांचित्स विचारोऽपि कर्मणा प्रतिबध्यते ।**
**श्रवणायापि बहुभिर्यो न लभ्य इति श्रुतेः ॥ ५३ ॥**

एवं तत्त्वविचारे क्रियमाणे प्रतिबन्धवशादत्र साक्षात्कारो न जायत इत्यभिधाय तीव्रपापिनां तु सोऽपि विचारो दुर्लभ इत्याह—**केषांचिदिति** । तत्र प्रमाणमाह—**श्रवणायेति** । यः परमात्मा बहुभिः पुरुषैः श्रवणायापि श्रोतुमपि न लभ्यः । दुर्लभ इत्यर्थः ॥ ५३ ॥

**अत्यन्तबुद्धिमान्द्याद्वा सामग्र्या वाप्यसंभवात् ।**
**यो विचारं न लभते ब्रह्मोपासीत सोऽनिशम् ५४**

एतावता सति प्रतिबन्धे तत्त्वसाक्षात्कारस्तत्साधनभूतो विचारश्च न संभवतीत्यभिधायेदानीं विचारासमर्थेन पुरुषार्थार्थिना किं कर्तव्यमित्यपेक्षायां 'विचाराक्षममर्त्याश्च तच्छ्रुत्वोपासते गुरोः' इति यत्प्राक् प्रतिज्ञातं तदुपपादयति—**अत्यन्तेति** । सामग्र्यसंभवो नाम तदुपदेष्टुर्गुरोरध्यात्मशास्त्रस्य देशकालादेर्वा असंभवस्तस्मादित्यर्थः ॥५४॥

**निर्गुणब्रह्मतत्त्वस्य न ह्युपास्तेरसंभवः ।**
**सगुणब्रह्मणीवात्र प्रत्ययावृत्तिसंभवात् ॥ ५५ ॥**

ननु निर्गुणब्रह्मतत्त्वस्य गुणरहितत्वात्तदुपासनं न घटत इत्याशङ्क्योपासनस्य प्रत्ययावृत्तिरूपत्वात् सगुणब्रह्मणीव निर्गुणेऽपि तत्संभवतीत्याह—**निर्गुणेति** ॥ ५५ ॥

**अवाङ्मनसगम्यं तन्नोपास्यमिति चेत्तदा ।**
**अवाङ्मनसगम्यस्य वेदनं न च संभवेत् ॥ ५६ ॥**

ननु निर्गुणस्य ब्रह्मणो वाङ्मनसगोचरत्वाभावान्नोपास्यत्वमित्याशङ्क्य वेदनपक्षेऽप्ययं दोषः समान इत्याह—**अवाङ्मनसेति** ॥ ५६ ॥

**वागाद्यगोचराकारमित्येवं यदि वेत्त्यसौ ।**
**वागाद्यगोचराकारमित्युपासीत नो कुतः ॥५७॥**

ननु ब्रह्मावाङ्मनसगोचरमित्येवं ज्ञातुं शक्यमित्याशङ्क्य एवमेवोपासितुमपि शक्यमित्याह—**वागादिति** ॥ ५७ ॥

**सगुणत्वमुपास्यत्वाद्यदि वेद्यत्वतोऽपि तत् ।**
**वेद्यं चेल्लक्षणावृत्त्या लक्षितं समुपास्यताम् ॥५८॥**

ब्रह्मण उपास्यत्वे सगुणत्वं प्रसज्येतेत्याशङ्क्य वेद्यत्वेऽपि तत्सगुणत्वं स्यादित्याह—**सगुणत्वमिति** । तत्सगुणत्वमित्यर्थः । ननु लक्षणावृत्त्याश्रयणान्न वेद्यत्वे सगुणत्वप्रसङ्ग इत्याशङ्क्य उपासनमपि तथैव क्रियतामित्याह—**वेद्यं चेदिति** ॥ ५८ ॥

**ब्रह्म विद्धि तदेव त्वं न त्विदं यदुपासते ।**
**इति श्रुतेरुपास्यत्वं निषिद्धं ब्रह्मणो यदि ॥ ५९ ॥**

ननु ब्रह्मण उपास्यत्वं श्रुत्या निषिध्यत इति शङ्कते—**ब्रह्म विद्धीति** । 'यन्मनसा न मनुते येनाहुर्मनो मतम् । तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते' इति श्रुतेरुपास्यस्य ब्रह्मत्वं निषेधतीत्यर्थः । यदवाङ्मनसगम्यं तदेव ब्रह्म विद्धीदमिति यत्तूपासते पुरुषास्तन्न विद्धीति योजना ॥ ५९ ॥

**विहितादन्यदेवेति श्रुतेर्वेद्यत्वमस्य न ।**
**यथा श्रुत्यैव वेद्यं चेत्तथा श्रुत्याप्युपास्यताम् ६०**

उपास्यत्ववद् वेद्यत्वस्यापि तन्निषेधः समान इत्याह—

विदितादिति। 'अन्यदेव तद्विदितादथो अविदितादधि' इति ब्रह्मणो वेद्यत्वमपि निवारयतीत्यर्थः। विदितात् ज्ञातादित्यर्थः। अविदितादज्ञातादित्यर्थः। विदिताविदिताभ्यामन्यद् ब्रह्मेति श्रुतिः प्रतिपादयतीति चेत्तर्हि तथैव तज्जानीयादित्याशङ्क्योपासनेऽप्येतत्समानमित्याह—यथेति ६०

**अवास्तवी वेद्यता चेदुपास्यत्वं तथा न किम्।**
**वृत्तिव्याप्तिर्वेद्यता चेदुपास्यत्वेऽपि तत्समम् ६१**

ननु वेद्यत्वं ब्रह्मणो वास्तवं न भवतीत्याशङ्क्योपास्यत्वमपि तथेत्याह—अवास्तवीति। ननु वेदनपक्षे वृत्तेर्ब्रह्माकारत्वमस्ति नोपासन इत्याशङ्क्य शब्दबलात्तदाकारत्वमुभयत्र समानमित्याह—वृत्तीति ॥ ६१ ॥

**का ते भक्तिरुपास्तौ चेत्कस्ते द्वेषस्तदीरय।**
**मानाभावो न वाच्योऽस्यां बहुश्रुतिषु दर्शनात् ६२**

युक्तिशून्य उपालम्भस्तु त्वत्पक्षेऽपि समान इत्याह—का त इति। ननु निर्गुणोपासने प्रमाणं नास्तीत्याशङ्क्यानेकासु श्रुतिषु उपलभ्यमानत्वान्नैवमित्याह—मानाभाव इति ६२

**उत्तरस्मिंस्तापनीये शैब्यप्रश्नेऽथ काठके।**
**माण्डूक्यादौ च सर्वत्र निर्गुणोपास्तिरीरिता ॥६३॥**

बहुश्रुतिषु दर्शनादित्युक्तमर्थं विवृणोति—उत्तरस्मिन्निति। तापनीयोपनिषदि तावत् 'देवा ह वै प्रजापतिम-

ब्रुवन्नणोरणीयांसमिममात्मानमोंकारं नो व्याचक्ष्व' इत्यादिना बहुधा निर्गुणोपासनमभिधीयते शैब्यप्रश्ने प्रश्नोपनिषदि पञ्चमे प्रश्ने। 'यः पुनरेतेन त्रिमात्रेणोमित्यनेनैवाक्षरेण परं पुरुषमभिध्यायीत' इति काठके कठवल्ल्यां 'सर्वे वेदा यत्पदमामनन्ति' इत्युपक्रम्य 'एतद्ध्येवाक्षरं ब्रह्म', 'एतदालम्बनं श्रेष्ठं' इत्यादिना प्रणवोपासनमुच्यते, माण्डूक्योपनिषदि 'ओमित्येतदक्षरमिदं सर्वं' इत्यादिनावस्थात्रयातीततुरीयोपासनमेवाभिधीयत इत्यर्थः । आदिशब्देन तैत्तिरीयमुण्डकादयो गृह्यन्ते ॥ ६३ ॥

**अनुष्ठानप्रकारोऽस्याः पञ्चीकरण ईरितः।**
**ज्ञानसाधनमेतच्चेन्नेति केनात्र वारितम् ॥ ६४ ॥**

ननु निर्गुणोपासनं कथमनुष्ठेयमित्यत आह—**अनुष्ठानेति**। नन्वेतदुपासनं ज्ञानसाधनमेव न मुक्तिसाधनमित्याशङ्क्य ब्रह्मतत्त्वोपास्त्यापि मुच्यते इति वदतामस्माकमनुकूलमित्याह—**ज्ञानसाधनमिति** ॥ ६४ ॥

**नानुतिष्ठति कोऽप्येतदिति चेन्मानुतिष्ठतु।**
**पुरुषस्यापराधेन किमुपास्तिः प्रदुष्यति ॥ ६५ ॥**

ननु सगुणोपासनमेव सर्वैरनुष्ठीयते न निर्गुणोपासनमित्याशङ्क्य तस्य प्रमाणसिद्धस्यापलापो न युक्त इत्याह—**नानुतिष्ठतीति** ॥ ६५ ॥

**इतोऽप्यतिशयं मत्वा मन्त्रान्वश्यादिकारिणः ।**
**मूढा जपन्तु तेभ्योऽतिमूढाः कृषिमुपासताम् ६६**

प्रमाणसिद्धस्यानुष्ठानाभावेनापरित्याज्यत्वे दृष्टान्तमाह -**इतोऽपीति** । अयमभिप्रायः—यथा सगुणोपासनेभ्यः कालान्तरभाविफलेभ्यो वश्यादिकारिमन्त्रेषु ऐहिकफलप्रदत्वमतिशयं बुद्ध्वा मूढानां तन्मन्त्रजपादौ प्रवृत्तावपि विवेकिभिः सगुणोपासनं न परित्यज्यते, यथावा नियमानुष्ठानापेक्षेभ्यस्तेभ्योऽपि मन्त्रेभ्यः कृष्यादावतिशयं नियमनैरपेक्ष्यं मत्वा मूढतराणां तत्र प्रवृत्तावपि तन्मन्त्रानुष्ठानं न परित्यज्यते तथा सांसारिकफलेप्सूनां निर्गुणोपासनानुष्ठानाभावेऽपि न मुमुक्षुभिर्निर्गुणो पासनं त्यज्यत इति ॥ ६६ ॥

**तिष्ठन्तु मूढाः प्रकृता निर्गुणोपास्तिरीर्यते ।**
**विद्यैक्यात्सर्वशाखास्थान्गुणानत्रोपसंहरेत् ६७**

एवं प्रासङ्गिकं परिसमाप्य प्रकृतमनुसरति—**तिष्ठन्त्विति** । 'सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषादि'त्युक्तन्यायेन निर्गुणोपासनस्यैकत्वात् तासु तासु शाखासु श्रुतानुपास्यगुणानत्रोपसंहृत्योपासनं कर्तव्यमित्याह-**विद्येति** ॥६७॥

**आनन्दादेर्विधेयस्य गुणसङ्घस्य संहृतिः ।**
**आनन्दादय इत्यस्मिन्सूत्रे व्यासेन वर्णिता ॥६८॥**

ते च गुणा द्विप्रकाराः विधेया निषेध्याश्चेति । तत्र

'आनन्दो ब्रह्म', 'विज्ञानमानन्दं ब्रह्म', 'नित्यः शुद्धो बुद्धः सत्यो मुक्तो निरञ्जनो विभुरद्वय आनन्दः परः प्रत्यगेकरसः' इत्यादयो ये विधेयगुणास्तेषामुपसंहारः 'आनन्दादयः प्रधानस्य' इत्यस्मिन्नधिकरणेऽभिहित इत्याह—**आनन्दादेरिति** ॥ ६८ ॥

**अस्थूलादेर्निषेध्यस्य गुणसङ्घस्य संहृतिः ।**
**तथा व्यासेन सूत्रेऽस्मिन्नुक्ताक्षरधियां त्विति ६९**

ये च 'अस्थूलमनण्वह्रस्वं यत्तदद्रेश्यमग्राह्यमशब्दमस्पर्शमरूपमव्ययमि' त्यादयो निषेध्यगुणास्तत्र तत्र श्रुतास्तेषामुपसंहारः 'अक्षरधियां त्ववरोधः सामान्यतद्भावाभ्यामौपसदनवत्तदुक्तम्' इत्यस्मिन्नधिकरणेऽभिहित इत्याह—**अस्थूलादेरिति** ॥ ६९ ॥

**निर्गुणब्रह्मतत्त्वस्य विद्यायां गुणसंहृतिः ।**
**न युज्येतेत्युपालम्भो व्यासं प्रत्येव मां न तु ७०**

ननु निर्गुणब्रह्मविद्यायां न गुणोपसंहार एव युज्यते निर्गुणविद्यात्वविरोधादित्याशङ्क्य सूत्रकारेणैवमभिहितस्योपसंहारस्यास्माभिरभिधीयमानत्वान्नास्मान् प्रतीदं चोद्यमुचितमित्याह—**निर्गुणेति** ॥ ७० ॥

**हिरण्यश्मश्रुसूर्यादिमूर्तीनामनुदाहृतेः ।**
**अविरुद्धं निर्गुणत्वमिति चेत्तुष्यतां त्वया ॥७१॥**

हिरण्यश्मश्रुत्वादिगुणविशिष्टमूर्तीनामनभिधानादिदं निर्गुणोपासनमेवेति चेत्तर्हि न विरोध इत्याह—**हिरण्येति**। हिरण्यश्मश्रुसूर्यादिमूर्तीनां हिरण्यमयानि श्मश्रूणि यस्यासौ हिरण्यश्मश्रुः तथाविधः सूर्यो हिरण्यश्मश्रुसूर्यः स आदिर्येषां ते हिरण्यश्मश्रुसूर्यादयस्तेषां मूर्तयो हिरण्यश्मश्रुसूर्यादिमूर्तयस्तासामिति विग्रहः ॥ ७१ ॥

**गुणानां लक्षकत्वेन न तत्त्वेऽन्तः प्रवेशनम्।**
**इति चेदस्त्वेवमेव ब्रह्मतत्त्वमुपास्यताम् ॥ ७२ ॥**

ननु आनन्दादीनामस्थूलादीनां च गुणानामुपास्यतत्त्वेऽन्तःप्रवेशाभावात्तद्गुणविशिष्टत्वेन कथमुपास्यत्वमित्याशङ्क्य तेषां तत्त्वान्तःप्रवेशाभावेऽपि तेषां लक्षकत्वसंभवात्तैर्लक्षितं ब्रह्मोपास्यमित्याह—**गुणानामिति** ॥ ७२ ॥

**आनन्दादिभिरस्थूलादिभिश्चात्मात्र लक्षितः।**
**अखण्डैकरसः सोऽहमस्मीत्येवमुपासते ॥ ७३ ॥**

तथोपासनप्रकारमेव दर्शयति—**आनन्दादिभिरिति**। अत्रासु श्रुतिषु योऽखण्डैकरस आत्मा आनन्दादिभिरस्थूलादिभिश्च गुणैर्लक्षितः सोऽहमस्मीत्येवमुपासते। मुमुक्षव इति शेषः ॥ ७३ ॥

**बोधोपास्त्योर्विशेषः क इति चेदुच्यते शृणु।**
**वस्तुतन्त्रो भवेद्बोधः कर्तृतन्त्रमुपासनम् ॥ ७४ ॥**

नन्वेवं सति विद्योपासनयोः कुतो भेद इत्याशङ्क्य वस्तुतन्त्रकर्तृतन्त्रत्वाभ्यां भेद इत्याह—**बोधोपास्त्योरिति** ७४

**विचाराज्जायते बोधोऽनिच्छा यं न निवर्तयेत् ।**
**स्वोत्पत्तिमात्रात्संसारे दहत्यखिलसत्यताम्** ७५

वैलक्षण्यान्तरसिद्धये बोधस्य हेत्वादिकं दर्शयति विचाराज्जायत इत्यादिना श्लोकद्वयेन—**विचारादिति** । विचाराद्वस्तुतत्त्वविचाराद्बोधो जायते । किंच विचाराज्जायमानं यं बोधमनिच्छाबोधो माभूदीत्येवंरूपा न निवर्तयेन्न निवारयेत् । उत्पद्यमानश्च बोधः स्वजन्ममात्रात्संसारेऽखिलस्य सत्यतां दहति नाशयति ॥ ७५ ॥

**तावता कृतकृत्यः सन्नित्यतृप्तिमुपागतः ।**
**जीवन्मुक्तिमनुप्राप्य प्रारब्धक्षयमीक्षते ॥ ७६ ॥**

तावता तत्त्वज्ञानोत्पत्तिमात्रेण निरतिशयं सुखं प्राप्नोतीत्यर्थः ॥ ७६ ॥

**आप्तोपदेशं विश्वस्य श्रद्धालुरविचारयन् ।**
**चिन्तयेत्प्रत्ययैरन्यैरनन्तरितवृत्तिभिः ॥ ७७ ॥**

उपासनायाश्च बोधाद्वैलक्षण्यान्तरसिद्धये तद्दर्शयति—**आप्त इति** । आप्तस्य गुरोरुपदेशमुपास्यस्वरूपप्रतिपादकवाक्यजातं विश्वस्य विश्वासं कृत्वाऽविचारयन् उपास्यतत्त्वं

प्रत्ययैरन्यैर्विजातीयघटादिविषयैरनन्तरितवृत्तिभिरव्यवहितवृत्तिभिश्चिन्तयेदिति ॥ ७७ ॥

**यावच्चिन्त्यस्वरूपत्वाभिमानः स्वस्य जायते ।**
**तावद्विचिन्त्य पश्चाच्च तथैवामृति धारयेत् ७८**

कियन्तं कालं चिन्तयेदित्याशङ्क्याह—**यावदिति**॥७८॥

**ब्रह्मचारी भिक्षमाणो युतः संवर्गविद्यया ।**
**संवर्गरूपता चित्ते धारयित्वा ह्यभिक्षत ॥ ७९ ॥**

उपासकस्य तद्रूपत्वाभिमानमुदाहरणप्रदर्शनेन स्पष्टीकरोति—**ब्रह्मचारीति** । कश्चित्संवर्गत्वगुणविशिष्टप्राणोपासकब्रह्मचारी भिक्षाहरणार्थमागत्याभिप्रतारिनाम्नो राज्ञः पुरतः 'महात्मनश्चतुरो देव एकः कः स जागार भुवनस्य गोपाः । तं कापेयं नाभिपश्यन्ति मर्त्या अभिप्रतारिन् बहुधा वसन्तम्' इति मन्त्रेण स्वात्मनः संवर्गरूपत्वं चित्ते धृतं प्रकटीकृतवानिति छान्दोग्ये श्रूयत इत्यर्थः ॥ ७९ ॥

**पुरुषस्येच्छया कर्तुमकर्तुं कर्तुमन्यथा ।**
**शक्योपास्तिरतो नित्यं कुर्यात्प्रत्ययसंततिम् ८०**

आमृति धारणे निमित्तं दर्शयन्ननिच्छा यं न निवर्तयेदित्युक्ताद्बोधधर्माद्वैलक्षण्यमाह—**पुरुषस्येति** । उपास्तिः पुरुषस्योपासकस्येच्छया कर्तुमकर्तुमन्यथा प्रकारान्तरेण वा कर्तुं शक्या । अतः पुरुषस्येच्छाधीनत्वादुपासनं सर्वदा कुर्यादित्यर्थः ॥ ८० ॥

**वेदाध्यायी ह्यप्रमत्तोऽधीते स्वप्नेऽधिवासतः ।**
**जपिता तु जपत्येव तथा ध्यातापि वासयेत् ८१**

एवं सदा चिन्तने किं भवतीत्यत आह—**वेदाध्यायीति** । अप्रमत्तो वेदाध्यायी सदाध्ययनशीलः जपिता सदा जपशीलोऽधिवासतः दृढवासनया स्वप्नादिष्वध्ययनं जपं वा करोति एवमुपासकोऽपि वासनादार्ढ्यात्स्वप्नादावपि ध्यायतीत्यर्थः ॥ ८१ ॥

**विरोधिप्रत्ययं त्यक्त्वा नैरन्तर्येण भावयन् ।**
**लभते वासनावेशात्स्वप्नादावपि भावनाम् ॥८२॥**

स्वप्नादावपि ध्यानानुवर्तने कारणमाह—**विरोधीति** । वासनावेशात्संस्कारपाटवात् । भावनां ध्यानम् ॥ ८२ ॥

**भुञ्जानोऽपि निजारब्धमास्थातिशयतोऽनिशम् ।**
**ध्यातुं शक्तो न संदेहो विषयव्यसनी यथा ॥८३॥**

ननु प्रारब्धकर्मवशाद्विषयाननुभवतः कथं नैरन्तर्येण भावनासिद्धिरित्याशङ्क्यास्थातिशये सति विषयव्यसनिवद्भावनासिद्धिः स्यादित्याह—**भुञ्जान इति** ॥ ८३ ॥

**परव्यसनिनी नारी व्यग्रापि गृहकर्मणि ।**
**तदेवास्वादयत्यन्तः परसङ्गरसायनम् ॥ ८४ ॥**

दृष्टान्तं विवृणोति—**परव्यसनिनीति** ॥ ८४ ॥

**परसङ्गं स्वादयन्त्या अपि नो गृहकर्म तत् ।**
**कुण्ठीभवेदपि त्वेतदापातेनैव वर्तते ॥ ८५ ॥**

परसङ्गास्वादने गृहकृत्यविच्छेदः स्यादित्याशङ्क्याह—परसङ्गमिति ॥ ८५ ॥

**गृहकृत्यव्यसनिनी यथा सम्यक्करोति तत् ।**
**परव्यसनिनी तद्वन्न करोत्येव सर्वथा ॥ ८६ ॥**

आपातेनैव वर्तते इत्युक्तमर्थं विवृणोति—**गृहकृत्येति** ॥ ८६ ॥

**एवं ध्यानैकनिष्ठोऽपि लेशाल्लौकिकमारभेत् ।**
**तत्त्वविस्त्वविरोधित्वाल्लौकिकं सम्यगाचरेत्॥८७॥**

दार्ष्टान्तिके योजयति—**एवं ध्यानेति** । ननु तत्त्वविदपि लौकिकव्यवहारं किं लेशेनाचरति किंवा सम्यगिति विषयव्यवहारस्य तत्त्वज्ञानाविरोधित्वात्सम्यगेवाचरतीत्याह—**तत्त्वविदिति** ॥ ८७ ॥

**मायामयः प्रपञ्चोऽयमात्मा चैतन्यरूपधृक् ।**
**इति बोधे विरोधः को लौकिकव्यवहारिणः ॥८८॥**

अविरुद्धत्वमेव दर्शयति—**मायामय इति** ॥ ८८ ॥

**अपेक्षते व्यवहृतिर्न प्रपञ्चस्य वस्तुताम् ।**
**नाप्यात्मजाड्यं किं त्वेषा साधनान्येव काङ्क्षति ८९**

विरोधाभावमेव प्रपञ्चयति—**अपेक्षत इति** ॥ ८९ ॥

**मनोवाक्कायतद्बाह्यपदार्थाः साधनानि तान् ।**
**तत्त्वविन्नोपमृद्नाति व्यवहारोऽस्य नो कुतः ॥९०॥**

कानि तानि व्यवहारसाधनानीत्यत आह—**मनोवागिति**। तद्बाह्याः पदार्थाः गृहक्षेत्रादयस्तान्मनआदींस्तत्त्वज्ञानी न निवारयति । अतोऽस्य ज्ञानिनो व्यवहारः कुतो न भवति । भवत्येवेत्यर्थः ॥ ९० ॥

**उपमृद्नाति चित्तं चेद्ध्यातासौ न तु तत्त्ववित् ।**
**न बुद्धिमर्दयन्दृष्टो घटतत्त्वस्य वेदिता ॥ ९१ ॥**

ननु विषयानुपमर्दनेऽपि तत्त्वविदा चित्तोपमर्दनं कार्यमित्याशङ्क्य तथाकरणे तत्त्वविदेव न स्यादित्याह—**उपमृद्नातीति**। ननु तत्त्वविदा चित्तं नोपमृद्यत इत्येतत्क दृष्टमित्याशङ्क्याह—**न बुद्धिमिति**। घटतत्त्वस्य वेदिता ज्ञाता बुद्धिमर्दयन्पीडयन्नैकाग्र्यं कुर्वन्पुरुषो न दृष्टः नोपलब्ध इत्यर्थः ॥ ९१ ॥

**सकृत्प्रत्ययमात्रेण घटश्चेद्भासते सदा ।**
**स्वप्रकाशोऽयमात्मा किं घटवच्च न भासते ॥९२॥**

घटस्य स्थूलत्वेन स्पष्टत्वात्तद्दर्शने चित्तपीडनं नापेक्ष्यते ब्रह्मणस्त्वतथात्वात्तज्ज्ञाने तदपेक्ष्यत इत्याशङ्क्य तस्य स्वप्रकाशत्वेन घटादपि स्पष्टतरत्वाच्चित्तनिरोधनं नैवापेक्ष्यत इत्याह—**सकृदिति** ॥ ९२ ॥

**स्वप्रकाशतया किं ते तद्बुद्धिस्तत्त्ववेदनम् ।**
**बुद्धिश्च क्षणनाश्येति चोद्यं तुल्यं घटादिषु ॥९३॥**

ननु ब्रह्मणः स्वप्रकाशत्वेऽपि तद्गोचराया बुद्धिवृत्तेरेव तत्त्वज्ञानत्वात्तस्याश्च क्षणिकत्वेन ब्रह्मणि पुनःपुनरवस्थानमपेक्ष्यत इत्याशङ्क्येदं चोद्यं घटादिष्वपि समानमित्याह—**स्वप्रकाशतयेति** ॥ ९३ ॥

**घटादौ निश्चिते बुद्धिर्नश्यत्येव यदा घटः ।**
**इष्टो नेतुं तदा शक्य इति चेत्सममात्मनि ॥ ९४ ॥**

घटादिज्ञानस्य क्षणिकत्वेऽपि सकृन्निश्चितस्य घटस्य सर्वदा व्यवहर्तुं शक्यत्वात्तत्र चित्तस्थैर्यसंपादनमप्रयोजकमित्याशङ्क्येदमात्मन्यपि समानमित्याह–**घटादाविति** ९४

**निश्चित्य सकृदात्मानं यदापेक्षा तदैव तम् ।**
**वक्तुं मन्तुं तथा ध्यातुं शक्नोत्येव हि तत्त्ववित् ९५**

सममात्मनीत्युक्तमर्थं विवृणोति–**निश्चित्येति** ॥ ९५ ॥

**उपासक इव ध्यायँल्लौकिकं विस्मरेद्यदि ।**
**विस्मरत्वेव सा ध्यानाद्विस्मृतिर्न तु वेदनात् ९६**

ननु तत्त्वविदप्युपासकवदात्मानुसंधानवशाज्जगदनुसंधानरहितो दृश्यत इत्याशङ्क्य सोऽनुसंधानाभावो ध्यानप्रयुक्तो न वेदनप्रयुक्त इत्याह—**उपासक इति** ॥ ९६ ॥

**ध्यानं त्वैच्छिकमेतस्य वेदनान्मुक्तिसिद्धितः ।**
**ज्ञानादेव तु कैवल्यमिति शास्त्रेषु डिण्डिमः ॥९७॥**

ननु तत्त्वविदापि मुक्तिसिद्धये ब्रह्मध्यानं कर्तव्यमित्या-

शङ्क्य 'ज्ञानादेव तु कैवल्यं प्राप्यते येन मुच्यते', 'तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय', 'ज्ञात्वा देवं मुच्यते सर्वपापैः' इत्यादिशास्त्रसद्भावान्न मोक्षाय ध्यानं कर्तव्यमित्याह—**ध्यानमिति** ॥ ९७ ॥

**तत्त्वविद्यदि न ध्यायेत्प्रवर्तेत तदा बहिः।**
**प्रवर्ततां सुखेनायं को बाधोऽस्य प्रवर्तने ॥ ९८ ॥**

ननु तत्त्वविदो ध्यानानभ्युपगमे तस्य सदा बहिःप्रवृत्तिः स्यादित्याशङ्क्याऽबाधकत्वात्प्रवृत्तेः साभ्युपेयत इत्याह—**तत्त्वविदिति** ॥ ९८ ॥

**अतिप्रसङ्ग इति चेत्प्रसङ्गं तावदीरय।**
**प्रसङ्गो विधिशास्त्रं चेन्न तत्तत्त्वविदं प्रति ॥९९॥**

बहिःप्रवृत्त्यभ्युपगमेऽतिप्रसङ्गः स्यादित्याशङ्क्य प्रसङ्गस्य दुर्निरूप्यत्वान्नैवमिति परिहरति—**अतिप्रसङ्ग इति**। न प्रसङ्गो दुर्निरूप्यो विधिशास्त्रस्य प्रसङ्गशब्देन विवक्षितत्वाद् इति चेन्न। तस्याज्ञानिविषयत्वेन तत्त्वविद्विषयत्वाभावादित्याह—**प्रसङ्ग इति**। विधिशास्त्रमित्युपलक्षणं निषेधशास्त्रस्यापि ॥ ९९ ॥

**वर्णाश्रमवयोवस्थाभिमानो यस्य विद्यते।**
**तस्यैव च निषेधाश्च विधयः सकला अपि ॥१००॥**

विधिशास्त्रस्याविद्वद्विषयत्वमेव दर्शयति—**वर्णेति** १००

**वर्णाश्रमादयो देहे मायया परिकल्पिताः ।**
**नात्मनो बोधरूपस्येत्येवं तस्य विनिश्चयः ॥ १ ॥**

ननु तत्त्वविदोऽपि देहधारित्वेन वर्णाश्रमाद्यभिमानित्वमस्तीत्याशङ्क्याह—**वर्णाश्रमेति** ॥ १ ॥

**समाधिमथ कर्माणि मा करोतु करोतु वा ।**
**हृदयेनास्तसर्वास्थो मुक्त एवोत्तमाशयः ॥ २ ॥**

ननु तत्त्वविनिश्चयस्तावत्तिष्ठतु शास्त्रं तु तस्य कर्तव्यं प्रतिपादयतीत्याशङ्क्य तदपि तस्य कर्तव्याभावमेव बोधयतीत्याह—**समाधिमिति** । यो हृदयेन बुद्ध्या अस्तसर्वास्थः अस्ता परित्यक्ता अशेषा आसक्तिविशेषा यस्य तथाविधः अत एवोत्तमाशयः उत्तम आशयोऽभिप्रायो निर्मलं ज्ञानं यस्य स तथोक्तः स मुक्त एव । अतः समाधिमथ कर्माणीत्यन्वयः ॥ २ ॥

**नैष्कर्म्येण न तस्यार्थस्तस्यार्थोऽस्ति न कर्मभिः ।**
**न समाधानजप्याभ्यां यस्य निर्वासनं मनः ॥ ३ ॥**

विदुषः कर्तव्यं नास्तीत्यत्र वचनान्तरमुदाहरति—**नैष्कर्म्येणेति** । नैष्कर्म्यं कर्मराहित्यं तेन । कर्मत्यागेनेत्यर्थः । समाधानं समाधिः । जप्यं जपः ॥ ३ ॥

**आत्मासङ्गस्ततोऽन्यत्स्यादिन्द्रजालं हि मायिकम् ।**
**इत्यचञ्चलनिर्णीते कुतो मनसि वासना ॥ ४ ॥**

ननु विदुषापि वासनानिवृत्तये ध्यानं कर्तव्यमित्याशङ्क्य सम्यग्ज्ञानिनो वासनैव नास्तीत्याह—**आत्मेति** ॥ ४ ॥

**एवं नास्ति प्रसङ्गोऽपि कुतोऽस्यातिप्रसञ्जनम् ।**
**प्रसङ्गो यस्य तस्यैव शङ्क्येतातिप्रसञ्जनम् ॥ ५ ॥**

भवत्वेवं प्रकृते किमायातमित्यत आह—**एवमिति** । कस्य तर्ह्यतिप्रसङ्ग इत्यत आह—**प्रसङ्ग इति** ॥ ५ ॥

**विध्यभावान्न बालस्य दृश्यतेऽतिप्रसञ्जनम् ।**
**स्यात्कुतोऽतिप्रसङ्गोऽस्य विध्यभावे समे सति ६**

एवं क्व दृष्टमित्यत आह—**विध्यभावादिति** । दार्ष्टान्तिके योजयति—**स्यादिति** ॥ ६ ॥

**न किंचिद्वेत्ति बालश्चेत्सर्वं वेत्त्येव तत्त्ववित् ।**
**अल्पज्ञस्यैव विधयः सर्वे स्युर्नान्ययोर्द्वयोः ॥ ७ ॥**

बालस्य विध्यभावे प्रयोजकमज्ञत्वमस्ति न विदुष इत्याशङ्क्य तस्याज्ञत्वाभावेऽपि विध्यभावप्रयोजकं सर्वज्ञत्वमस्तीत्याह—**न किंचिदिति** । तर्हि विध्यधिकारः कस्येत्याशङ्क्याह—**अल्पज्ञस्येति** ॥ ७ ॥

**शापानुग्रहसामर्थ्यं यस्यासौ तत्त्वविद्यदि ।**
**तन्न शापादिसामर्थ्यं फलं स्यात्तपसो यतः ॥ ८ ॥**

ननु व्यासादिवच्छापानुग्रहसामर्थ्यं यस्य स एव तत्त्वविन्नान्य इति शङ्क्यते—**शापेति** । परिहरति—**यन्नेति** । तत्र हेतुमाह—**शापादिसामर्थ्यमिति** ॥ ८ ॥

**व्यासादेरपि सामर्थ्यं दृश्यते तपसो बलात् ।**
**शापादिकारणादन्यत्तपो ज्ञानस्य कारणम् ॥ ९ ॥**

ननु व्यासादीनां तत्त्वविदामपि शापादिसामर्थ्यं दृश्यते इत्याशङ्क्य तेषां न तत्त्वज्ञानफलं अपितु तपःफलमित्याह—**व्यासादेरिति** । ननु तर्हि 'तपसा ब्रह्म विजिज्ञासस्व' इति श्रुतेस्तपोरहितस्य तत्त्वज्ञानमपि न घटेतेत्याशङ्क्य शापादिकारणादन्यस्य तपसः सत्त्वान्नैवमित्याह—**शापेति** ॥ ९ ॥

**द्वयं यस्यास्ति तस्यैव सामर्थ्यज्ञानयोर्जनिः ।**
**एकैकं तु ततः कुर्वन्नेकैकं लभते फलम् ॥ ११० ॥**

तर्हि तेषां व्यासादीनां तत्त्वज्ञानित्वं शापादिकारणत्वं च कथं दृश्यत इत्याशङ्क्य उभयविधतपसः सद्भावादित्याह—**द्वयमिति** ॥ ११० ॥

**सामर्थ्यहीनो निन्द्यश्चेद्यतिभिर्विधिवर्जितः ।**
**निन्द्यन्ते यतयोऽप्यन्यैरनिशं भोगलम्पटैः ॥११॥**

ननु यः शापादिसामर्थ्यरहितस्तस्य विध्यभावेऽपि विहितानुष्ठातृभिर्निन्द्यत्वं स्यादित्याशङ्क्य तेषामपि विषयलम्पटैर्निन्द्यत्वं स्यादित्याह—**सामर्थ्यहीन इति** ॥ ११ ॥

**भिक्षावस्त्रादि रक्षेयुर्यद्येते भोगतुष्टये ।**
**अहो यतित्वमेतेषां वैराग्यभरमन्थरम् ॥ १२ ॥**

एतेऽपि भोगतुष्ट्यर्थं विषयान्संपादयेयुरित्याशङ्क्य तदा तेषां यतित्वमेव हीयेतेत्यभिप्रायेणोपहसति—**भिक्षेति** १२

**वर्णाश्रमपरान्मूढा निन्दन्त्वित्युच्यते यदि ।**
**देहात्ममतयो बुद्धं निन्दन्त्वाश्रममानिनः ॥ १३ ॥**

विषयलम्पटैः पामरैश्च क्रियमाणया निन्दया क्रियापराणां शिष्टानां हानिर्नास्तीत्युच्यते चेत्तर्हि देहाभिमानिभिः क्रियापरैः क्रियमाणया निन्दया तत्त्वविदोऽपि न हानिरित्याह—**वर्णाश्रमेति** ॥ १३ ॥

**तदित्थं तत्त्वविज्ञाने साधनानुपमर्दनात् ।**
**ज्ञानिनाचरितुं शक्यं सम्यग्राज्यादि लौकिकं १४**

प्रासङ्गिकं परिसमाप्य प्रकृतमनुसरति—**तदित्थमिति ।** तत्तस्मात्कारणादित्थमुक्तेन प्रकारेण तत्त्वज्ञाने सति साधनानुपमर्दनाल्लौकिकव्यवहारसाधनानां मनआदीनामविलापनाल्लौकिकं राज्यादि राज्यपरिपालनादिकर्म वा ज्ञानिना सम्यगाचरितुं शक्यमित्यर्थः ॥ १४ ॥

**मिथ्यात्वबुद्ध्या तत्रेच्छा नास्ति चेत्तर्हि मास्तु तत्**
**ध्यायन्वाथ व्यवहरन्यथारब्धं वसत्वयम् ॥ १५॥**

ननु तत्त्वविदः प्रपञ्चमिथ्यात्वज्ञानेन तत्रेच्छैव नोदीयादिति चेत्तर्हि स्वकर्मानुसारेण वर्ततामित्याह—**मिथ्यात्वेति** ॥ १५ ॥

**उपासकस्तु सततं ध्यायन्नेव वसेद्यतः ।**
**ध्यानेनैव कृतं तस्य ब्रह्मत्वं विष्णुतादिवत् ॥१६॥**

इदानीमुपासकस्यातो वैषम्यं दर्शयति—**उपासक इति** । तत्रोपपत्तिमाह—**यत इति** । यतः कारणात्तस्य ब्रह्मत्वं ध्यानेनैव कृतं न प्रमाणेन प्रमितमतो ध्यायिना सदा ध्यानं कर्तव्यमित्यर्थः । तत्र दृष्टान्तः विष्णुतादिवदिति । यथा स्वस्मिन्ध्यानेन संपादितस्य विष्णुत्वादेः पारमार्थिकत्वं नास्ति तद्वदित्यर्थः ॥ १६ ॥

**ध्यानोपादानकं यत्तद्ध्यानाभावे विलीयते ।**
**वास्तवी ब्रह्मता नैव ज्ञानाभावे विलीयते ॥ १७ ॥**

ध्यानसंपादितस्यापि तस्य पारमार्थिकत्वं किं न स्यादित्याशङ्क्य ध्यानसंपादितस्य वाग्धेनुत्वादेर्ध्यानापायेऽपगमदर्शनान्नैवमित्याह—**ध्यानेनेति** । ज्ञानेन प्रकाशितस्य ब्रह्मत्वस्य ततो वैलक्षण्यमाह—**वास्तवीति** । हेतुगर्भितं विशेषणम् । यतो ब्रह्मत्वं वास्तवमतो ज्ञापकज्ञानाभावे सति नैव विलीयते ॥ १७ ॥

**ततोऽभिज्ञापकं ज्ञानं न नित्यं जनयत्यदः ।**
**ज्ञापकाभावमात्रेण न हि सत्यं विलीयते ॥ १८ ॥**

वास्तवत्वादेव ज्ञानेन नैव जन्यत इत्याह–**तत इति** । यतोऽदो ब्रह्मत्वं नित्यं ततो ज्ञानं तस्याभिज्ञापकमवोधक-

मेव न जनकमित्यर्थः। तत्रोपपत्तिं व्यतिरेकमुखेनाह—**ज्ञापकेति**। अयमभिप्रायः—ब्रह्मत्वं यदि ज्ञानजन्यं स्यात्तर्हि ज्ञाननाशे स्वयं विलीयते अतो न मन्यत इत्यर्थः ॥ ११८ ॥

**अस्त्येवोपासकस्यापि वास्तवी ब्रह्मतेति चेत्।**
**पामराणां तिरश्चां च वास्तवी ब्रह्मता न किम् ११९**

ननु ज्ञानिवदुपासकस्यापि ब्रह्मत्वं वास्तवमस्त्येवेति शङ्कते—**अस्त्येवेति**। अत्यल्पमिदमुच्यत इत्यभिप्रायेणाह—**पामराणामिति** ॥ ११९ ॥

**अज्ञानादपुमर्थत्वमुभयत्रापि तत्समम्।**
**उपवासाद्यथा भिक्षा वरं ध्यानं तथान्यतः ॥१२०॥**

पामरादीनां विद्यमानमपि तद्ब्रह्मत्वमज्ञातत्वान्न पुरुषार्थोपयोगीत्याशङ्क्य अज्ञातत्वेनापुरुषार्थोपयोगित्वमुपासकस्यापि समानमित्याह—**अज्ञानादिति**। ननु तर्ह्युपासनं किमर्थमभिधीयत इत्याशङ्क्येतरानुष्ठानेभ्यः श्रेष्ठत्वाभिप्रायेणोक्तमिति दृष्टान्तपूर्वकमाह—**उपवासादिति** ॥१२०॥

**पामराणां व्यवहृतेर्वरं कर्माद्यनुष्ठितिः।**
**ततोऽपि सगुणोपास्तिर्निर्गुणोपासना ततः ॥१२१॥**

इतरानुष्ठानाच्छ्रैष्ठ्यमेव दर्शयति—**पामराणामिति** १२१

**यावद्विज्ञानसामीप्यं तावच्छ्रैष्ठ्यं विवर्धते।**
**ब्रह्मज्ञानायते साक्षान्निर्गुणोपासनं शनैः ॥ १२२ ॥**

उत्तरोत्तरश्रैष्ठ्ये कारणमाह—**यावदिति** । निर्गुणोपासनस्य सर्वश्रैष्ठ्ये कारणमाह-**ब्रह्मज्ञानायत इति** २२

**यथा संवादिविभ्रान्तिः फलकाले प्रमायते ।**
**विद्यायते तथोपास्तिर्मुक्तिकालेऽतिपाकतः ॥२३॥**

उक्तमर्थं दृष्टान्तप्रदर्शनपूर्वकं द्रढयति-**तथेति**॥ २३ ॥

**संवादिभ्रमतः पुंसः प्रवृत्तस्यान्यमानतः ।**
**प्रमेति चेत्तथोपास्तिर्मान्तरे कारणायताम् ॥२४॥**

ननु संवादिविभ्रान्तिः स्वयमेव न प्रमा भवति किंतु तया प्रवृत्तस्येन्द्रियार्थसंनिकर्षात्प्रमा जायत इति शङ्कते—**संवादीति** । अस्तु तर्हि निर्गुणोपासनमपि निदिध्यासनरूपं सद्वाक्यजन्यापरोक्षज्ञाने कारणं भविष्यतीत्याह—**तथेति** ॥ २४ ॥

**मूर्तिध्यानस्य मन्त्रादेरपि कारणता यदि ।**
**अस्तु नाम तथाप्यत्र प्रत्यासत्तिर्विशिष्यते ॥२५॥**

नन्वेवं सति मूर्तिध्यानादेरपि चित्तैकाग्र्यसंपादनद्वारा अपरोक्षज्ञानसाधनत्वं स्यादिति चेत्तदप्यङ्गीक्रियत इत्याह—**मूर्तीति** । तर्हि निर्गुणोपासने कोऽतिशयस्तत्राह—**तथापीति** । प्रत्यासत्तिः सामीप्यं ज्ञानं प्रतीति शेषः॥२५॥

**निर्गुणोपासनं पक्वं समाधिः स्याच्छनैस्ततः ।**
**यः समाधिर्निरोधाख्यः सोऽनायासेन लभ्यते २६**

प्रत्यासत्तिप्रकारमेव दर्शयति—**निर्गुणेति** । निर्गुणोपासनं यदा पक्कं भवति तदा सविकल्पकसमाधिः स्यात् । ततः सविकल्पकसमाधेर्निरोधाख्यो यस्तस्यापि निरोधे सर्वनिरोधान्निर्बीजः समाधिरिति सूत्रोक्तलक्षणो निर्विकल्पकः समाधिः सोऽनायासेन लभ्यते ॥ २६ ॥

**निरोधलाभे पुंसोऽन्तरसङ्गं वस्तु शिष्यते ।**
**पुनःपुनर्वासितेऽस्मिन्वाक्याज्जायेत तत्त्वधीः २७**

भवत्वेवं निर्विकल्पकलाभस्ततः किमित्यत आह—**निरोधेति** । ततोऽपि किमित्यत आह—**पुनः पुनरिति** । अस्मिन्नसङ्गे वस्तुनि पुनः पुनर्वासिते भाविते सति वाक्यात्तत्वमस्यादिलक्षणात्तत्त्वधीस्तत्त्वज्ञानमहं ब्रह्मास्मीत्येवमाकारं जायेत उत्पद्येत ॥ २७ ॥

**निर्विकारासङ्गनित्यस्वप्रकाशैकपूर्णताः ।**
**बुद्धौ झटिति शास्त्रोक्ता आरोहन्त्यविवादतः॥२८॥**

तत्त्वज्ञानस्वरूपमेव विशदयति—**निर्विकारेति**॥२८॥

**योगाभ्यासस्त्वेतदर्थोऽमृतबिन्द्वादिषु श्रुतः ।**
**एवं च दृष्टद्वारापि हेतुत्वादन्यतो वरम् ॥ २९ ॥**

ननु निर्विकल्पकसमाधिवशादपरोक्षज्ञानमुदेतीत्यत्र किं प्रमाणमित्याशङ्क्यामृतबिन्द्वादिश्रुतयः सर्वा अपि प्रमाणमित्याह—**योगाभ्यासेति** । फलितमाह—**एवमिति** ।

एवंच सति निर्गुणोपासनस्याप्यपरोक्षज्ञानप्रत्यासत्तिसंभवे सति दृष्टद्वारापि निर्विकल्पकसमाधिलाभद्वारेण अपिशब्दाददृष्टद्वारापि हेतुत्वात् ज्ञानसाधनत्वादन्यतः सगुणोपासनादिभ्यो वरं श्रेष्ठमित्यर्थः ॥ २९ ॥

**उपेक्ष्य तत्तीर्थयात्राजपादीनेव कुर्वताम् ।**
**पिण्डं समुत्सृज्य करं लेढीति न्याय आपतेत् १३०**

एवं निर्गुणोपासनस्यापरोक्षज्ञानसाधनत्वे सिद्धे सति तत्परित्यज्यान्यत्र प्रवृत्तानां वृथा श्रमः स्यादिति लौकिकन्यायदर्शनेनाह—**उपेक्ष्येति** ॥ १३० ॥

**उपासकानामप्येवं विचारत्यागतो यदि ।**
**बाढं तस्माद्विचारस्यासंभवे योग ईरितः ॥ ३१ ॥**

नन्वात्मतत्त्वविचारं परित्यज्य निर्गुणोपासनं कुर्वतामप्ययं न्यायः समान इत्याशङ्क्याङ्गीकरोति—**उपासकानामिति** । तर्हि निर्गुणोपासनं कुतः प्रतिपाद्यत इत्यत आह—**तस्मादिति** । यस्मादुक्तन्यायप्रसङ्गस्तस्माद्विचारासंभवे योग उपासनमुक्तमित्यर्थः ॥ ३१ ॥

**बहुव्याकुलचित्तानां विचारात्तत्त्वधीर्नहि ।**
**यो यो मुख्यस्ततस्तेषां धीदर्पस्तेन नश्यति ॥३२॥**

विचारासंभवे कारणमाह—**बह्विति** । यतो विचारो न संभवति अतो योगः कर्तव्य इत्याह—**योग इति** ।

मुख्यत्वे कारणमाह—**धीदर्प इति**। तेन योगेन यतो धीदर्पो नश्यति अतो मुख्य इत्यर्थः ॥ ३२ ॥

**अव्याकुलधियां मोहमात्रेणाच्छादितात्मनाम्।**
**सांख्यनामा विचारः स्यान्मुख्यो झटिति सिद्धिदः**

एवं व्याकुलचित्तानां योगस्य मुख्यत्वमभिधाय तद्रहितानां विचार एव मुख्य इत्याह—**अव्याकुलेति**। सांख्यनामा विचारः सांख्यशब्दवाच्यस्तत्त्वविचारो मुख्यः। कुत इत्यत आह—**झटितीति** ॥ ३३ ॥

**यत्सांख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते।**
**एकं सांख्यं च योगं च यः पश्यति स पश्यति ३४**

योगसांख्ययोरुभयोरपि तत्त्वज्ञानद्वारा मुक्तिसाधनत्वे गीतावाक्यं प्रमाणयति—**यत्सांख्यैरिति**। यः सांख्यं च योगं च फलत एकं पश्यति स शास्त्रार्थं सम्यक् पश्यतीत्यर्थः ॥ ३४ ॥

**तत्कारणं सांख्ययोगाधिगम्यमिति हि श्रुतिः।**
**यस्तु श्रुतेर्विरुद्धः स आभासः सांख्ययोगयोः ३५**

न केवलं गीतावाक्यं किंतु तन्मूलभूता श्रुतिरप्यस्तीत्याह—**तत्कारणमिति**। ननु सांख्ययोगयोरुभयोरपि तत्त्वज्ञानद्वारा मुक्तिसाधनत्वेनाङ्गीकारे तच्छास्त्रे प्रतिपादितानां तत्त्वानामपि स्वीकार्यत्वं स्यादित्याशङ्क्याह—**यस्त्विति**। आभासो बाध्यत इत्यर्थः ॥ ३५ ॥

**उपासनं नापि पक्वमिह यस्य परत्र सः ।**
**मरणे ब्रह्मलोके वा तत्त्वं विज्ञाय मुच्यते ॥ ३६ ॥**

ननूपासनं कुर्वाणस्य तत्त्वज्ञानात्प्राङ् मरणे सति मोक्षो न सिध्येदित्याशङ्क्याह—**उपासनमिति** ॥ ३६ ॥

**यं यं वापि स्मरन्भावं त्यजत्यन्ते कलेवरम् ।**
**तं तमेवैति यच्चित्तस्तेन यातीति शास्त्रतः ॥३७॥**

मरणावसरे ज्ञानान्मुक्तिलाभे प्रमाणमाह—**यं यं वापीति** । 'यच्चित्तस्तेनैव प्राणमायाति प्राणस्तेजसा युक्तः सहात्मना यथासंकल्पितं लोकं नयति' इति वाक्याच्चेत्यर्थः ॥ ३७ ॥

**अन्त्यप्रत्ययतो नूनं भावि जन्म तथा सति ।**
**निर्गुणप्रत्ययोऽपि स्यात्सगुणोपासने यथा ॥३८॥**

ननूदाहृताभ्यां श्रुतिस्मृतिवाक्याभ्यामन्त्यप्रत्ययतो भाविजन्माभिधीयते न ज्ञानान्मुक्तिरित्याशङ्क्य मुखतस्तथाभिधानमङ्गीकरोति—**अन्त्यप्रत्ययत इति** । कथं तर्हि मरणकाले ज्ञानान्मोक्षो भवतीत्यत्रेदं वाक्यद्वयं प्रमाणत्वेनोपन्यस्तमित्याशङ्क्याह—**तथा सतीति** । तथा सति अन्त्यप्रत्ययाद्भाविजन्मविनिश्चये सति सगुणोपासकस्य यथा मरणावसरे पूर्वाभ्यासवशात्सगुणब्रह्माकारः प्रत्ययो जायते एवं निर्गुणोपासकस्यापि निर्गुणब्रह्मगोचरः प्रत्ययो जायते । जनिष्यते इत्यर्थः ॥ ३८ ॥

**नित्यनिर्गुणरूपं तन्नाममात्रेण गीयताम् ।**
**अर्थतो मोक्ष एवैष संवादिभ्रमवन्मतः ॥ ३९ ॥**

ननु निर्गुणप्रत्ययाभ्यासवशान्निर्गुणब्रह्मप्राप्तिरेव भवेन्न मुक्तिरित्याशङ्क्य ब्रह्मप्राप्तिमुक्त्योः शब्दमात्रेण भेदो नार्थत इत्याह—**नित्यनिर्गुणेति** । तद्ब्रह्म नित्यमिति नाममात्रेणोच्यतामर्थतस्त्वेष मोक्ष एव स्वरूपावस्थितिर्मुक्तिरित्यभिधानादिति भावः । तत्र दृष्टान्तमाह—**संवादीति** । यथा संवादिभ्रमो नाममात्रेण भ्रम इत्युच्यते वस्तुतस्तत्त्वज्ञानमेव तद्वदित्यर्थः ॥ ३९ ॥

**तत्सामर्थ्याज्जायते धीर्मूलाविद्यानिवर्तिका ।**
**अविमुक्तोपासनेन तारकब्रह्मबुद्धिवत् ॥ १४० ॥**

ननु निर्गुणोपासनस्य मानसक्रियारूपस्य मुक्तिसाधनत्वाभिधानं विरुद्धमित्याशङ्क्य तज्जन्यज्ञानस्य मोक्षसाधनत्वाभिधानान्न विरोध इत्याह—**तदिति** । तत्र दृष्टान्तमाह—**अविमुक्त इति** । यथा अविमुक्तसगुणब्रह्मोपासनसामर्थ्यात्तारकब्रह्मविद्या जायते एवं निर्गुणोपासनान्निर्गुणब्रह्मज्ञानं जायत इत्यर्थः ॥ १४० ॥

**सोऽकामो निष्काम इति ह्यशरीरो निरिन्द्रियः ।**
**अभयं हीति मुक्तत्वं तापनीये फलं श्रुतम् ॥४१॥**

ननु निर्गुणोपासनस्य मोक्षः फलमित्यत्र किं प्रमाणमि-

त्याशङ्क्याह—सोऽकाम इति। 'सोऽकामो निष्काम आप्तकाम आत्मकामो न तस्य प्राणा उत्क्रामन्त्यत्रैव समवलीयन्ते ब्रह्मैव सन्ब्रह्माप्येति अशरीरो निरिन्द्रियोऽप्राणो ह्यमनाः सच्चिदानन्दमात्रः स स्वराट् भवति य एवं वेद चिन्मयो ह्ययमोंकारश्चिन्मयमिदं सर्वं तस्मात्परमेश्वर एवैकमेव तद्भवत्येतदमृतमभयमेतद्ब्रह्माभयं वै ब्रह्म भवति य एवं वेदेति रहस्यं' इत्यादिवाक्यैस्तापनीयोपनिषदि निर्गुणोपासनस्य मोक्षः फलत्वेन श्रूयत इत्यर्थः ॥ ४१ ॥

**उपासनस्य सामर्थ्याद्विद्योत्पत्तिर्भवेत्ततः।**
**नान्यः पन्था इति ह्येतच्छास्त्रं नैव विरुध्यते ॥४२॥**

ननूपासनया मुक्तिः स्याच्चेत् 'नान्यः पन्था विद्यतेऽयनाय' इति श्रुतिविरोध इत्याशङ्क्य विद्याव्यवधानेन मोक्षप्रदत्वाभिधानान्न विरोध इत्याह—उपासनस्येति ॥४२॥

**निष्कामोपासनान्मुक्तिस्तापनीये समीरिता।**
**ब्रह्मलोकः सकामस्य शैब्यप्रश्ने समीरितः॥ ४३॥**

'मरणे ब्रह्मलोके वा तत्त्वं विज्ञाय मुच्यते' इत्युक्तार्थे श्रुतिं प्रमाणयति—निष्काम इति। तत्र सोऽकाम इत्यादि तापनीयवाक्यं पूर्वमेवोदाहृतम् ॥ ४३ ॥

**य उपास्ते त्रिमात्रेण ब्रह्मलोके स नीयते।**
**स एतस्माज्जीवघनात्परं पुरुषमीक्षते ॥ ४४ ॥**

इदानीं शैब्यप्रश्नोपनिषद्वाक्यमर्थतः पठति—**य उपास्त इति** । 'यः पुनरेतत्त्रिमात्रेणोमित्यनेनैवाक्षरेण परं पुरुषमभिध्यायीत स तेजसि सूर्ये संपन्नो यथा पादोदरस्त्वचा विनिर्मुच्यते एवं ह वै स पाप्मना विनिर्मुक्तः स सामभिरुन्नीयते ब्रह्मलोकं स एतस्माज्जीवघनात्परं पुरिशयं पुरुषमीक्षते' इति सकामस्य ब्रह्मलोकप्राप्तिः श्रूयत इत्यर्थः । ननु शैब्यप्रश्ने सकामस्य ब्रह्मलोकगतिरेव प्रतीयत इत्याशङ्क्य तत्र तत्त्वसाक्षात्कारश्च श्रूयत इत्याह—**स एतस्मादिति** । ब्रह्मलोकं गतः स उपासकः एतस्माज्जीवघनाज्जीवसमष्टिरूपात् हिरण्यगर्भात्परमुत्कृष्टं पुरुषं निरुपाधिकचैतन्यरूपं परमात्मानमीक्षते साक्षात्करोति ॥ ४४ ॥

**अप्रतीकाधिकरणे तत्क्रतुन्याय ईरितः ।**
**ब्रह्मलोकफलं तस्मात्सकामस्येति वर्णितम् ॥४५॥**

किंच 'अप्रतीकालम्बनान्नयतीति बादरायणः' 'उभयथादोषात्तत्क्रतुश्च' इत्यत्र कामानुसारेण फलप्राप्तिर्भवतीति प्रतिपादितं तस्मादपि सकामस्य ब्रह्मलोकगतिरित्युक्तेत्याह-**अप्रतीकेति** ॥ ४५ ॥

**निर्गुणोपास्तिसामर्थ्यात्तत्र तत्त्वमवेक्षते ।**
**पुनरावर्तते नायं कल्पान्ते च विमुच्यते ॥ ४६ ॥**

तर्हि सकामस्य तत्त्वज्ञानं कुतो जायत इत्याशङ्क्य—

**निर्गुणेति** । 'इमं मानवमावर्तं नावर्तते न स पुनरावर्तते न स पुनरावर्तते' इति 'ब्रह्मणा सह ते सर्वे' इत्यादिश्रुतिस्मृतिसद्भावान्न तस्य पुनः संसारप्राप्तिः किंतु मुक्तिरेवेत्याह—**पुनरावर्तत नायमिति** ॥ ४६ ॥

**प्रणवोपास्तयः प्रायो निर्गुणा एव वेदगाः ।**
**क्वचित्सगुणताप्युक्ता प्रणवोपासनस्य हि ॥ ४७ ॥**

इदानीं प्रणवोपासनप्रसङ्गाद्बुद्धिस्थं तद्द्वैविध्यं दर्शयति—**प्रणवेति** ॥ ४७ ॥

**परापरब्रह्मरूप ओंकार उपवर्णितः ।**
**पिप्पलादेन मुनिना सत्यकामाय पृच्छते ॥ ४८ ॥**

द्वैविध्ये प्रमाणमाह—**परापरेति** । 'एतद्वै सत्यकाम परं चापरं च ब्रह्म यदोंकारस्तस्माद्विद्वानेतेनैवायतनेनैकतरमन्वेति' इति उभयरूपत्वं प्रतिपादितमित्यर्थः ॥ ४८ ॥

**एतदालम्बनं ज्ञात्वा यो यदिच्छति तस्य तत् ।**
**इति प्रोक्तं यमेनापि पृच्छते नचिकेतसे ॥ ४९ ॥**

कठवल्ल्यां यमेनापि 'एतदालम्बनं ज्ञात्वा' इत्यादिना द्वैविध्यमुक्तमित्याह—**एतदालम्बनमिति** ॥ ४९ ॥

**इह वा मरणे वास्य ब्रह्मलोकेऽथ वा भवेत् ।**
**ब्रह्मसाक्षात्कृतिः सम्यगुपासीनस्य निर्गुणम् १५०**

उक्तमर्थमुपसंहरति—**इह वेति** ॥ १५० ॥

**अर्थोऽयमात्मगीतायामपि स्पष्टमुदीरितः ।**
**विचाराक्षम आत्मानमुपासीतेति संततम् ॥५१॥**

विचारात्तत्त्वज्ञानसंपादनासमर्थस्य निर्गुणब्रह्मध्यानेऽधिकार इत्ययमर्थ आत्मगीतायां सम्यगभिहित इत्याह—**अर्थोऽयमिति** ॥ ५१ ॥

**साक्षात्कर्तुमशक्तोऽपि चिन्तयेन्मामशङ्कितः ।**
**कालेनानुभवारूढो भवेयं फलितो ध्रुवम् ॥५२॥**

आत्मगीतावाक्यान्येवोदाहरति—**साक्षादिति** ॥५२॥

**यथाऽगाधनिधेर्लब्धौ नोपायः खननं विना ।**
**मल्लाभेऽपि तथा स्वात्मचिन्तां मुक्त्वा न चापरः**

ध्यानस्य सम्यग्ज्ञानोपायत्वे दृष्टान्तमाह—**यथेति** । दार्ष्टान्तिके योजयति—**मल्लाभ इति** ॥ ५३ ॥

**देहोपलमपाकृत्य बुद्धिकुद्दालकात्पुनः ।**
**खात्वा मनोभुवं भूयो गृह्णीयान्मां निधिं पुमान् ।**

व्यतिरेकेणोक्तमर्थमन्वयमुखेनाह-**देहोपलमिति** ५४

**अनुभूतेरभावेऽपि ब्रह्मास्मीत्येव चिन्त्यताम् ।**
**अप्यसत्प्राप्यते ध्यानान्नित्याप्तं ब्रह्म किं पुनः ५५**

ज्ञानेऽसमर्थस्य ध्यानेऽधिकार इत्यत्र वाक्यान्तरं पठति—**अनुभूतेरिति** । ध्यानाद्धि ब्रह्मप्राप्तौ कैमुतिकन्यायमाह—**अपीति** । उपासकस्य पूर्वमविद्यमानमपि देवत्वा-

दिकं ध्यानात्प्राप्यते किल, स्वरूपत्वेन नित्यप्राप्तं सर्वात्मकं ब्रह्म ध्यानात्प्राप्यत इति किमु वक्तव्यमित्यर्थः॥ ५५॥

**अनात्मबुद्धिशैथिल्यं फलं ध्यानाद्दिनेदिने।**
**पश्यन्नपि न चेद्ध्यायेत्कोऽपरोऽस्मात्पशुर्वद॥५६॥**

ब्रह्मध्यानफलस्य प्रत्यक्षसिद्धत्वादपि ध्यानं कर्तव्यमित्याह—**अनात्मेति** ॥ ५६ ॥

**देहाभिमानं विध्वस्य ध्यानादात्मानमद्वयम्।**
**पश्यन्मर्त्योऽमृतो भूत्वा ह्यत्र ब्रह्म समश्नुते॥५७॥**

इदानीमुपपादितमर्थं संक्षिप्य दर्शयति—**देहाभिमानमिति**। मरणशीले देहेऽहमित्यभिमानपरित्यागात्स्वयममृतो भूत्वा अत्रास्मिन्नेव शरीरे स्वस्य निजं रूपं सच्चिदानन्दरूपं ब्रह्म प्राप्नोति ॥ ५७ ॥

**ध्यानदीपमिमं सम्यक्परामृशति यो नरः।**
**मुक्तसंशय एवायं ध्यायति ब्रह्म संततम्॥१५८॥**

**इति श्रीमत्परमहंसपरिव्राजकाचार्यविद्यारण्यप्रणीतपञ्चदश्यां ध्यानदीपप्रकरणम्॥ ९॥**

ध्यानदीपानुसंधानफलमाह—**ध्यानदीपमिति** १५८

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीभारतीतीर्थविद्यारण्यमुनिवर्यकिंकरेण रामकृष्णाख्यविदुषा विरचिता ध्यानदीपव्याख्या समाप्ता ॥ ९ ॥

---

# नाटकदीपप्रकरणम् ॥ १० ॥

परमात्माद्वयानन्दपूर्णः पूर्वं स्वमायया ।
स्वयमेव जगद्भूत्वा प्राविशज्जीवरूपतः ॥ १ ॥

नत्वा श्रीभारतीतीर्थविद्यारण्यमुनीश्वरौ ।
अर्थो नाटकदीपस्य मया संक्षिप्य वक्ष्यते ॥ १ ॥

चिकीर्षितस्य ग्रन्थस्य निष्प्रत्यूहपरिपूरणायाभिमतदेवतातत्त्वानुस्मरणलक्षणं मङ्गलमाचरन् मन्दाधिकारिणामनायासेन निष्प्रपञ्चब्रह्मात्मतत्त्वप्रतिपत्तिसिद्धये 'अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्च्यते । शिष्याणां बोधसिद्ध्यर्थं तत्त्वज्ञैः कल्पितः क्रमः ॥' इति न्यायमनुसृत्य आत्मन्यध्यारोपं तावदाह—**परमात्मेति** । पूर्वं सृष्टेः प्रागद्वयानन्दपूर्णः 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं', 'विज्ञानमानन्दं ब्रह्म', 'पूर्णमदः पूर्णमिदं' इत्यादिश्रुतिप्रसिद्धः स्वगतादिभेदशून्यः परमानन्दरूपः परिपूर्णः परमात्मा स्वमायया 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्' इति श्रुत्युक्त्या स्वनिष्ठया मायाशक्त्या 'स्वयमेव जगद्भूत्वा तदात्मानं स्वयमकुरुत सच्च त्यच्चाभवत्' इति श्रुतेः स्वयमेव जगदाकारतां प्राप्य जीवरूपतः प्राविशत् 'तत्सृष्ट्वा

तदेवानुप्राविशत्', 'अनेन जीवेनात्मनानुप्रविश्य' इत्यादि-श्रुतेर्जीवरूपेण प्रविष्टवानित्यर्थः ॥ १ ॥

**विष्ण्वाद्युत्तमदेहेषु प्रविष्टो देवता भवेत् ।**
**मर्त्याद्यधमदेहेषु स्थितो भजति मर्त्यताम् ॥ २ ॥**

ननु परमात्मन एवैकस्य सर्वशरीरेषु प्रविष्टत्वे पूज्यपूजकादिभावेन प्रतीयमान उत्तमाधमभावो विरुध्येतेत्याशङ्क्याह—**विष्ण्वति** । नायं स्वाभाविक उत्तमाधमभावः किंतु शरीरोपाधिनिबन्धनः अतो न विरोध इति भावः॥२॥

**अनेकजन्मभजनात्स्वविचारं चिकीर्षति ।**
**विचारेण विनष्टायां मायायां शिष्यते स्वयम् ॥३॥**

इत्थमात्मन्यध्यारोपं संक्षेपेण प्रदर्श्य ससाधनं तदपवादं संक्षिप्य दर्शयति—**अनेकेति** । अनेकजन्मभजनादनेकेषु जन्मस्वनुष्ठितानां कर्मणां ब्रह्मणि समर्पणरूपाद्भजनात् स्वविचारं स्वस्यात्मनो ब्रह्मरूपस्य ज्ञानसाधनं श्रवणादिकं चिकीर्षति कर्तुमिच्छति, ततः स्वविचारेण विचारजनितज्ञानेन मायायां स्वस्याद्वयानन्दत्वादिरूपाच्छादिकायामज्ञानाविद्यादिशब्दवाच्यायां विनष्टायां निवृत्तायां स्वयमद्वयानन्दपूर्णः परमात्मैवावशिष्यते ॥ ३ ॥

**अद्वयानन्दरूपस्य सद्वयत्वं च दुःखिता ।**
**बन्धः प्रोक्तः स्वरूपेण स्थितिर्मुक्तिरितीर्यते ॥ ४ ॥**

ननु 'तद्ब्रह्माहमिति ज्ञात्वा सर्वबन्धैः प्रमुच्यते' इत्यादिश्रुतिभिर्बन्धनिवृत्तिलक्षणस्य मोक्षस्य ज्ञानफलत्वाभिधानात्परमात्मविशेषणस्य तत्फलताभिधानमनुपपन्नमित्याशङ्क्याह—**अद्वयानन्देति**। अद्वितीये ब्रह्मणि वास्तवस्य बन्धस्य मोक्षस्य वा दुर्निरूपत्वाद्दुःखित्वादिभ्रम एव बन्धः, स्वरूपावस्थितिलक्षणा तन्निवृत्तिरेव मोक्षः, अतो न श्रुतिविरोध इति भावः ॥ ४ ॥

**अविचारकृतो बन्धो विचारेण निवर्तते।**
**तस्माज्जीवपरात्मानौ सर्वदैव विचारयेत् ॥ ५ ॥**

ननु 'कर्मणैव हि संसिद्धिमास्थिता जनकादयः' इति स्मृतेर्मोक्षस्य कर्मसाधनत्वावगमात् किमनेन विचारजनितज्ञानेनेत्यत आह—**अविचारेति**। विचारप्रागभावोपलक्षिताज्ञानकृतस्य बन्धस्य न विचारजन्यज्ञानादन्यतो निवृत्तिरुपपद्यते उदाहृतस्मृतौ च संसिद्धिशब्देन चित्तशुद्धिरेवाभिधीयते न मोक्ष इति भावः। विचारेण बन्धनिवृत्तिरुक्ता किंविषयेण विचारेणेत्यत आह—**तस्मादिति**। तत्त्वसाक्षात्कारपर्यन्तं सर्वदा विचारं कुर्यादित्यर्थः ॥ ५ ॥

**अहमित्यभिमन्ता यः कर्ताऽसौ तस्य साधनम्।**
**मनस्तस्य क्रिये अन्तर्बहिर्वृत्ती क्रमोत्थिते ॥ ६ ॥**

तत्र जीवस्वरूपं तावन्निरूपयति—**अहमिति**। यश्चि-

दाभासविशिष्टोऽहंकारो व्यवहारदशायां देहादावहमित्यभिमन्यते असौ कर्ता कर्तृत्वादिधर्मविशिष्टो जीव इत्यर्थः । तस्य किं करणमित्यपेक्षायामाह—**तस्येति** । कामादिवृत्तिमानन्तःकरणभागो मनः । करणस्य क्रियाव्याप्तत्वात्तत्क्रियां दर्शयति—**क्रियेति** ॥ ६ ॥

**अन्तर्मुखाहमित्येषा वृत्तिः कर्तारमुल्लिखेत् ।**
**बहिर्मुखेदमित्येषा बाह्यं वस्त्विदमुल्लिखेत् ॥ ७ ॥**

अनयोः स्वरूपं विषयं च विविच्य दर्शयति—**अन्तर्मुखेति** । **इदमित्येषेति** । बहिर्वृत्तेः स्वरूपाभिनयः अवशिष्टेन विषयप्रदर्शनम् । बाह्यदेहाद्बहिर्वर्तमानमिदंतया निर्दिश्यमानं वस्तूल्लिखेत् । विषयीकुर्यादित्यर्थः ॥ ७ ॥

**इदमो ये विशेषाः स्युर्गन्धरूपरसादयः ।**
**असांकर्येण तान्भिन्द्याद्घ्राणादीन्द्रियपञ्चकम् ॥८॥**

ननु मनसैव सर्वव्यवहारसिद्धौ चक्षुरादिवैयर्थ्यं प्रसज्येतेत्याशङ्क्याह—**इदम इति** । मनसेदमिति सामान्यमात्रं गृह्यते न तु तद्विशेषो गन्धादिरतस्तद्ग्रहणे घ्राणादिकमुपयुज्यत इत्यर्थः ॥ ८ ॥

**कर्तारं च क्रियां तद्वद्व्यावृत्तविषयानपि ।**
**स्फोरयेदेकयत्नेन योऽसौ साक्ष्यत्र चिद्वपुः ॥९॥**

एवं सोपकरणं जीवस्वरूपं निरूप्य परमात्मानं निरूप-

यति—**कर्तारमिति** । कर्तारं पूर्वोक्तमहंकाररूपं क्रियामहमिदमात्मकमनोवृत्तिरूपां व्यावृत्तविषयानपि व्यावृत्तान् अन्योन्यविलक्षणान् घ्राणादिग्राह्यान् गन्धादीन्विषयांश्च एकयत्नेन युगपदेव यश्चिद्वपुश्चिद्रूप एव सन्स्फोरयेत्प्रकाशयेत् असावत्र वेदान्तशास्त्रे साक्षीत्युच्यत इत्यर्थः ॥ ९ ॥

**ईक्षे शृणोमि जिघ्रामि स्वादयामि स्पृशाम्यहम् ।**
**इति भासयते सर्वं नृत्यशालास्थदीपवत् ॥ १० ॥**

साक्षिण एकयत्नेन सर्वस्फोरकत्वमभिनीय दर्शयति—**ईक्षे शृणोमीति** । ईक्षे रूपमहं पश्यामीत्येवं द्रष्टृदर्शनदृश्यलक्षणां त्रिपुटीमेकयत्नेन भासयेत् । एवं शृणोमीत्यादावपि योज्यम् । युगपदविकारित्वे अनेकावभासकत्वे दृष्टान्तमाह—**नृत्यशालास्थदीपवदिति** ॥ १० ॥

**नृत्यशालास्थितो दीपः प्रभुं सभ्यांश्च नर्तकीम् ।**
**दीपयेदविशेषेण तदभावेऽपि दीप्यते ॥ ११ ॥**

दृष्टान्तं स्पष्टयति—**नृत्येति** । अविशेषेण प्रभ्वादिविषयविशेषावभासनाय वृद्ध्यादिविकारमन्तरेणेति यावत् ११

**अहंकारं धियं साक्षी विषयानपि भासयेत् ।**
**अहंकाराद्यभावेऽपि स्वयं भात्येव पूर्ववत् ॥१२॥**

दार्ष्टान्तिके योजयति—**अहंकारमिति** । सुषुप्त्यादावहंकाराद्यभावेऽपि तत्साक्षितया भात्येवेत्यर्थः ॥ १२ ॥

**निरन्तरं भासमाने कूटस्थे ज्ञप्तिरूपतः।**
**तद्भासा भास्यमानेयं बुद्धिर्नृत्यत्यनेकधा ॥ १३ ॥**

ननु प्रकाशरूपाया बुद्धेरेवाहंकारादिसर्ववस्त्ववभासकत्वसंभवात्किं तदतिरिक्तसाक्षिकल्पनयेत्याशङ्क्याह—**निरन्तरमिति**। कूटस्थे निर्विकारे साक्षिणि ज्ञप्तिरूपतः स्वप्रकाशचैतन्यतया निरन्तरं भासमाने सदा स्फुरति सति इयं बुद्धिस्तद्भासा तस्य साक्षिणः स्वरूपचैतन्येन भासमाना प्रकाश्यमानैव अनेकधा घटोऽयं पटोऽयमित्यादिज्ञानाकारेण नृत्यति विक्रियते । अयं भावः—यतो बुद्धेर्विकारितया जडत्वात्स्वतःस्फूर्तिराहित्यमतस्तदतिरिक्तः सर्वावभासकः साक्ष्यभ्युपगन्तव्य इति ॥ १३ ॥

**अहंकारः प्रभुः सभ्या विषया नर्तकी मतिः।**
**तालादिधारीण्यक्षाणि दीपः साक्ष्यवभासकः १४**

उक्तमर्थं श्रोतृबुद्धिसौकर्याय नाटकत्वेन निरूपयति—**अहंकार इति**। विषयभोगसाकल्यवैकल्याभिमानप्रयुक्तहर्षविषादवत्त्वान्नृत्याभिमानिप्रभुतुल्यत्वमहंकारस्य परिसरवर्तित्वेऽपि विषयाणां तद्राहित्यात्सभ्यपुरुषसाम्यं नानाविधविकारवत्त्वान्नर्तकीसाम्यं धियः धीविक्रियाणामनुकूलव्यापारवत्त्वात्तालादिधारिसमानत्वमिन्द्रियाणां एतत्सर्वावभासकत्वात्साक्षिणो दीपसादृश्यमस्त्विति द्रष्टव्यम् ॥ १४ ॥

**स्वस्थानसंस्थितो दीपः सर्वतो भासयेद्यथा ।**
**स्थिरस्थायी तथा साक्षी बहिरन्तः प्रकाशयेत् १५**

ननु साक्षिणोऽप्यहंकाराद्यवभासकत्वे तेन तेन संबन्धापगमागमरूपविकारवत्त्वं स्यादित्याशङ्क्याह—**स्वस्थानेति** । दीपो यथा गमनादिविकारशून्यः स्वदेशेऽवस्थित एव सन् स्वसन्निहिताखिलपदार्थानवभासयति एवं साक्ष्यपीति भावः ॥ १५ ॥

**बहिरन्तर्विभागोऽयं देहापेक्षो न साक्षिणि ।**
**विषया बाह्यदेशस्था देहस्यान्तरहंकृतिः ॥ १६ ॥**

ननु साक्षिणो बहिरन्तरवभासकत्वाभिधानमनुपपन्नम् 'अपूर्वमनपरमनन्तरमबाह्यम्' इति श्रुत्या तस्य बाह्यान्तरविभागाभावाभिधानादित्याशङ्क्याह—**बहिरिति** । कस्य बाह्यत्वं कस्य चान्तरत्वमित्यत आह—**विषया इति** ॥१६॥

**अन्तस्था धीः सहैवाक्षैर्बहिर्याति पुनः पुनः ।**
**भास्यबुद्धिस्थचाञ्चल्यं साक्षिण्यारोप्यते वृथा १७**

ननु 'स्थिरस्थायी तथा साक्षी बहिरन्तः प्रकाशयेत्' इति अविकारिणः सतो बहिरन्तरवभासकोक्तिरयुक्ता अहं घटं पश्यामीत्यत्र अहमित्यन्तरहंकारसाक्षितया प्रथमतोभासकस्य अनन्तरं घटं पश्यामीति घटाकारवृत्तिस्फुरणरूपेण बहिर्निर्गमानुभवादित्याशङ्क्याह—**अन्तःस्थेति** । दृष्ट-

ग्राहकत्वेन देहान्तरावस्थिता बुद्धिः रूपादिग्रहणाय चक्षुरादिद्वारा भूयो भूयो निर्गच्छति, तथाच तन्निष्ठं चाञ्चल्यं तद्भासके साक्षिण्यारोप्यते अतो न वास्तवं साक्षिणश्चाञ्चल्यमिति भावः ॥ १७ ॥

**गृहान्तरगतः स्वल्पो गवाक्षादातपोऽचलः ।**
**तत्र हस्ते नर्त्यमाने नृत्यतीवातपो यथा ॥ १८ ॥**

भासके भास्यचाञ्चल्यारोपः क्व दृष्ट इत्याशङ्क्याह—**गृहान्तरगत इति** । गवाक्षाद्गृहान्तरगतः स्वल्पातपोऽचल एव वर्तते तत्र तस्मिन्नातपे पुरुषेण हस्ते नर्त्यमाने इतस्ततश्चाल्यमाने यथा आतपो नृत्यतीव चलतीव लक्ष्यते नतु चलतीत्यर्थः ॥ १८ ॥

**निजस्थानस्थितः साक्षी बहिरन्तर्गमागमौ ।**
**अकुर्वन्बुद्धिचाञ्चल्यात्करोतीव तथा तथा ॥१९॥**

दार्ष्टान्तिकमाह—**निजस्थानेति** ॥ १९ ॥

**न बाह्यो नान्तरः साक्षी बुद्धेर्देशौ हि तावुभौ ।**
**बुद्ध्याद्यशेषसंशान्तौ यत्र भात्यस्ति तत्र सः २०**

निजस्थानस्थित इत्यनेन किं बाह्यादिदेशस्थत्वमेवोच्यते नेत्याह—**न बाह्य इति** । तत्र हेतुमाह—**बुद्धेरिति** । तर्हि किं विवक्षितमित्यत आह—**बुद्ध्यादीति** ।

आदिशब्देनेन्द्रियादयो गृह्यन्ते संशान्तिशब्देन तत्प्रतीत्युपरतिर्विवक्षिता ॥ २० ॥

**देशः कोऽपि न भासेत यदि तर्ह्यस्त्वदेशभाक् ।**
**सर्वदेशप्रक्लृप्त्यैव सर्वगत्वं न तु स्वतः ॥ २१ ॥**

ननु सर्वव्यवहारोपरतौ देश एव नोपलभ्यते कुतस्तन्निष्ठत्वमुच्यत इत्याशङ्क्य स्वाभिप्रायमाविष्करोति—**देश इति** । देशादिकल्पनाधिष्ठानस्य स्वातिरिक्तदेशापेक्षा नास्तीति भावः । ननु देशाद्यभावे शास्त्रे सर्वगतसर्वसाक्षित्वाद्युक्तिर्विरुध्येतेत्यत आह—**सर्वदेशेति** । स्वाभाविकमेव किं न स्यादित्यत आह—**नतु स्वत इति** । अद्वितीयत्वादसङ्गत्वाच्चेति भावः ॥ २१ ॥

**स्वन्तर्बहिर्वा सर्वं वा यं देशं परिकल्पयेत् ।**
**बुद्धिस्तद्देशगः साक्षी तथा वस्तुषु योजयेत् ॥२२॥**

सर्वगतत्ववत्सर्वसाक्षित्वमपि न वास्तवमित्याह—**स्वन्तर्बहिरिति** ॥ २२ ॥

**यद्यद्रूपादि कल्प्येत बुद्ध्या तत्तत्प्रकाशयन् ।**
**तस्य तस्य भवेत्साक्षी स्वतो वाग्बुद्ध्यगोचरः ॥२३॥**

तथा वस्तुषु योजयेदित्येतत्प्रपञ्चयति—**यद्यदिति** । किं तस्य निजं रूपमित्यत आह—**स्वत इति** ॥ २३ ॥

**कथं तादृङ्मया ग्राह्य इति चेन्मैव गृह्यताम् ।**
**सर्वग्रहोपसंशान्तौ स्वयमेवावशिष्यते ॥ २४ ॥**

अवाङ्मनसगोचरत्वे मुमुक्षुणा न गृह्येतेति शङ्कते—**कथमिति** । अग्राह्यत्वमिष्टमेवेत्याह—**मैवेति** । नन्वात्मनो ग्राह्यत्वाभावे विचारेण विनष्टायां मायायां शिष्यते स्वयमित्युक्तं परमात्मावशेषणं न सिध्येदित्यत आह—**सर्वग्रहेति** । स्वात्मातिरिक्तस्य द्वैतस्य मिथ्यात्वनिश्चयेन तत्प्रतीत्युपशान्तौ स्वात्मैव सत्यतयावशिष्यत इति भावः ॥ २४ ॥

**न तत्र मानापेक्षास्ति स्वप्रकाशस्वरूपतः ।**
**तादृग्व्युत्पत्त्यपेक्षा चेच्छ्रुतिं पठ गुरोर्मुखात् ॥२५॥**

यद्यप्युक्तन्यायेन स्वात्मा परिशिष्यते तथापि तदापरोक्ष्याय किंचित्प्रमाणमपेक्षितमित्यत आह—**न तत्रेति** । तत्र हेतुमाह—**स्वप्रकाशेति** । नन्वात्मनः स्वप्रकाशतया स्वतः स्फूर्तौ मानं नापेक्ष्यते इति व्युत्पत्तिसिद्धये मानमपेक्षितमित्याशङ्क्य श्रुतिरेवात्र प्रमाणमित्याह—**तादृगिति** ॥ २५ ॥

**यदि सर्वग्रहत्यागोऽशक्यस्तर्हि धियं व्रज ।**
**शरणं तदधीनोऽन्तर्बहिर्वैषोऽनुभूयताम् ॥ २६ ॥**

**इति श्रीमत्परमहंसपरिव्राजकाचार्यविद्यारण्यकृतपञ्चदश्यां नाटकदीपप्रकरणम् ।**

एवमुत्तमाधिकारिण आत्मानुभवोपायमभिधाय मन्दाधिकारिणस्तं दर्शयति—**यदीति**। बुद्धिशरणत्वे किं फलमित्यत आह—**तदधीन इति**। बुद्ध्या यद्यत्परिकल्प्यते बाह्यमान्तरं वा तस्य तस्य साक्षित्वेन तदधीनः परमात्मा तथैवानुभूयतामित्यर्थः ॥ २६ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यविद्यारण्यमुनिवर्यकिंकरेण रामकृष्णाख्यविदुषा विरचिता नाटकदीपव्याख्या समाप्ता ॥ १० ॥

# ब्रह्मानन्दे योगानन्दप्रकरणम् ॥ ११ ॥



**ब्रह्मानन्दं प्रवक्ष्यामि ज्ञाते तस्मिन्नशेषतः ।**
**ऐहिकामुष्मिकानर्थव्रातं हित्वा सुखायते ॥ १ ॥**

नत्वा श्रीभारतीतीर्थविद्यारण्यमुनीश्वरौ ।
ब्रह्मानन्दाभिधं ग्रन्थं व्याकुर्वे बोधसिद्धये ॥ १ ॥

चिकीर्षितग्रन्थस्य निष्प्रत्यूहपरिपूरणाय परिपन्थिकल्मषनिवृत्तये अभिमतदेवतातत्त्वानुसंधानलक्षणमङ्गलमाचरन् श्रोतृप्रवृत्तिसिद्धये सप्रयोजनमभिधेयमाविष्कुर्वन्ग्रन्थारम्भं प्रतिजानीते—**ब्रह्मानन्दमिति** । 'निर्विशेषं परं ब्रह्म साक्षात्कर्तुमनीश्वराः । ये मन्दास्तेऽनुकम्प्यन्ते सविशेषनिरूपणैः' इति सविशेषब्रह्मरूपाणां देवतानां तत्त्वस्य निर्विशेषब्रह्मरूपत्वाभिधानाद्ब्रह्मणश्च 'आनन्दो ब्रह्म' इत्यादिश्रुतिभिरानन्दरूपताभिधानाद्ब्रह्मानन्दमित्यानन्दरूपस्य ब्रह्मणो वाचकशब्दप्रयोगेण 'यद्धि मनसा ध्यायति तद्वाचा वदति' इति श्रुतिप्रोक्तन्यायेन ब्रह्मानुसंधानलक्षणं मङ्गलाचरणं सिद्धं ब्रह्मणश्च सर्ववेदान्तप्रतिपाद्यत्वात् तत्प्रकरणरूपस्य अस्य ग्रन्थस्यापि तदेव विषय इति ब्रह्मशब्दप्रयोगेण विषयश्चापि सूचितः—**ऐहिकेति** । उत्तरार्धेन अनिष्टनिवृत्तीष्टप्राप्तिरूपं प्रयोजनद्वयं मुखत एवोक्तम् । ब्रह्मानन्दं

ब्रह्म चासावानन्दश्चेति ब्रह्मानन्दः वाच्यवाचकयोरभेदोपचारात्तत्प्रतिपादको ग्रन्थोऽपि ब्रह्मानन्दस्तं प्रवक्ष्यामीति तस्मिन्प्रतिपाद्यप्रतिपादकरूपे ब्रह्मानन्दे ज्ञातेऽवगते सति ऐहिकामुष्मिकानर्थव्रातं ऐहिकानामिह लोके भवानां देहपुत्रादिष्वहंममाभिमानप्रयुक्तानामाध्यात्मिकादितापानामामुष्मिकाणाममुष्मिन् परलोके भवानां च तेषामनर्थानां व्रातः समूहः तमशेषतः निःशेषं यथा भवति तथा हित्वा परित्यज्य सुखायते सुखरूपं ब्रह्मैव भवति ॥ १ ॥

**ब्रह्मवित्परमाप्नोति शोकं तरति चात्मवित् ।**
**रसो ब्रह्म रसं लब्ध्वानन्दीभवति नान्यथा ॥२॥**

ब्रह्मज्ञानस्य अनिष्टनिवृत्तीष्टप्राप्तिहेतुत्वे बहूनि श्रुतिस्मृतिवाक्यानि प्रमाणानि सन्तीति प्रदर्शयितुकामः तावत् 'ब्रह्मविदाप्नोति परं श्रुतं ह्येव मे भगवद्दृशेभ्यस्तरति शोकमात्मविदिति सोऽहं भगवः शोचामि तं मा भगवान् शोकस्य पारं तारयतु' इति वाक्यद्वयमर्थतः पठति— **ब्रह्मविदिति** । ब्रह्मवित् ब्रह्म वेत्तीति परमुत्कृष्टमानन्दरूपं ब्रह्म प्राप्नोति आत्मविद् भूमशब्दवाच्यं देशकालवस्तुपरिच्छेदशून्यम् आत्मानं वेत्तीत्यात्मवित् शोकं स्वसंसृष्टं पुरुषं शोचयतीति शोकस्तमोमूलः संसारस्तं तरति अतिक्रामति । ननूदाहृततैत्तिरीयकश्रुतिवाक्ये ब्रह्मज्ञानस्य

परप्राप्तिहेतुतैवावभासते नानन्दप्राप्तिहेतुतेत्याशङ्क्य आनन्दप्राप्तिहेतुत्वप्रतिपादनपरं 'रसो वै सः रसं ह्येवायं लब्ध्वानन्दी भवति' इति तदीयमेव वाक्यमर्थतः पठति—**रस इति**। 'सत्यं ज्ञानमनन्तं ब्रह्म', 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' इति प्रकरणादौ ब्रह्मात्मशब्दाभ्यामभिहितो य आत्मासौ रसः सारः। आनन्दरूप इत्यर्थः। रसमानन्दरूपं ब्रह्म लब्ध्वा ब्रह्माहमस्मीति ज्ञानेन प्राप्य आनन्दीभवतीति अपरिच्छिन्ननिरतिशयसुखवान्भवति। उक्तमर्थं व्यतिरेकप्रदर्शनेन द्रढयति—**नान्यथेति**। अन्यथा ब्रह्मात्मैकत्वज्ञानं विहाय साधनान्तरानुष्ठानेन नानन्दीभवतीत्यर्थः॥ २॥

**प्रतिष्ठां विन्दते स्वस्मिन्यदा स्यादथ सोऽभयः।**
**कुरुतेऽस्मिन्नन्तरं चेदथ तस्य भयं भवेत्॥ ३॥**

एवमन्वयमुखेनेष्टप्राप्त्यनिष्टनिवृत्तिप्रतिपादनपराणि वाक्यानि प्रदर्श्य अन्वयव्यतिरेकाभ्यामनर्थनिवृत्तिप्रदर्शनापरम् 'यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दतेऽथ सोऽभयं गतो भवति' 'यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुतेऽथ तस्य भयं भवति' इतिवाक्यद्वयमर्थतोऽनुक्रामति—**प्रतिष्ठामिति**। अस्यायमर्थः। यदा यस्मिन्काले हीति विद्वत्प्रसिद्धिप्रदर्शनपरो

निपातः । एवेत्ययमेवानर्थनिवृत्त्युपायो नान्य इति नियमनार्थः । एष मुमुक्षुः एतस्मिन्विद्वदनुभवगम्ये अदृश्ये इन्द्रियागोचरे अनात्म्ये अनात्मीये स्वरूपतया स्वकीयत्वरहिते अनिरुक्ते निरुक्तं निर्वचनं शब्देनाभिधानं यत्र नास्ति तदनिरुक्तं तस्मिन्ननिलयने निलीयतेऽस्मिन्निति निलयनमाधारः स न विद्यते यस्य तस्मिन् स्वमहिम्नि स्थित इत्यर्थः । अभयमद्वितीयं 'द्वितीयाद्वै भयं भवति' इति श्रुतेर्भयशब्देनात्र भयहेतुर्भेदो लक्ष्यते । न विद्यते भयं भेदो यथा भवति तथा प्रतिष्ठां प्रकर्षेण संशयविपर्ययराहित्येन स्थितिः ब्रह्माहमस्मीत्यवस्थानं प्रतिष्ठा तां विन्दते गुरूपसत्त्यादिना श्रवणादिकं कृत्वा लभते । अथ तदानीमेव स एवं विद्वानभयं भयरहितं मोक्षरूपमद्वितीयं ब्रह्म गतः प्राप्तो भवति 'ब्रह्म वेद ब्रह्मैव भवति' इति श्रुतेः । यदा यस्मिन्नेव काले एष पूर्वोक्तः एतस्मिन्नदृष्टत्वादिगुणके प्रत्यगभिन्ने ब्रह्मणि । उदिति निपातोऽपिशब्दार्थः । अरमुदल्पमपि अन्तरं भेदं उपास्योपासकादिलक्षणं कुरुते पश्यति धातूनामनेकार्थत्वादथ तदानीमेव तस्य भेददर्शिनो भयं संसारप्रयुक्तं दुःखं भवति ॥ ३ ॥

**वायुः सूर्यो वह्निरिन्द्रो मृत्युर्जन्मान्तरेऽन्तरम् ।**
**कृत्वा धर्मं विजानन्तोऽप्यस्माद्भीत्या चरन्तिहि ॥**

भेददर्शिनां भयं भवतीत्येतद्दृढीकर्तुं ब्रह्मात्मैकत्वज्ञानरहितानां वाय्वादीनां भयप्रदर्शनपरं 'भीषास्माद्वातः पवते' इत्यादिमन्त्रमर्थतः पठति—**वायुरिति**। वाय्वादयो जगन्नियामकत्वेन प्रसिद्धाः पञ्चापि देवता अतीते जन्मनि धर्ममिष्टापूर्तादिलक्षणं विजानन्तोऽपि ज्ञानपूर्वकमनुष्ठितवन्तोऽपि अन्तरं प्रत्यग्ब्रह्मणो भेदं कृत्वास्माद्ब्रह्मणो भीत्यास्मिन्वाय्वादिजन्मनि चरन्ति स्वव्यापारेषु सदा प्रवर्तन्ते। हिशब्देन 'भयादस्याग्निस्तपति भयात्तपति सूर्यः। भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चमः' इति कठश्रुतौ यमेनोक्तां प्रसिद्धिं दर्शयति ॥ ४ ॥

**आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चन।**
**एतमेव तपेन्नैषा चिन्ता कर्माग्निसंभृता ॥ ५ ॥**

ननु 'तरति शोकमात्मवित्' इत्यादिषूदाहृतवाक्येषु ब्रह्मानन्दज्ञानस्यानर्थनिवृत्तिहेतुत्वं स्पष्टं नावभासत इत्याशङ्क्य तथाप्रतिपादनपरं वाक्यमुदाहरति—**आनन्दमिति**। राहोः शिर इत्यादिवद् भेदव्यपदेश औपचारिकः। ब्रह्मणः स्वरूपभूतमानन्दं विद्वानपरोक्षतया जानन् पुरुषः कुतश्चन कस्मादपि ऐहिकभयहेतोर्व्याघ्रादेः पारलौकिकभयहेतोः पापादेर्वा न बिभेति भयं न प्राप्नोति। ननु तत्त्वविदः पापादेर्भयं नास्तीत्येतत्कुतोऽवगम्यत इत्याशङ्क्य

तत्प्रतिपादकम् 'एतँ ह वाव न तपति किमहँ साधु नाकरवं किमहं पापमकरवम्' इति वाक्यमर्थतः पठति— **एतमिति** । कर्माग्निसंभृता पुण्यपापरूपकं कर्मैवाग्निः अकरणकरणाभ्यामग्निवत्संतापहेतुत्वात् तेन संभृता संपादिता एषा पुण्यं नाऽकरवं कस्मात्, पापं तु कृतवान् कुतइत्येवंरूपा चिन्ता एतमेव तत्त्वविदमेव न तपेत् न संतापयेत् नान्यमविद्वांसम् । स तु तया चिन्तया सदा संतप्यत इत्यर्थः ॥ ५ ॥

**एवं विद्वान्कर्मणी द्वे हित्वात्मानं स्मरेत्सदा ।**
**कृते च कर्मणी स्वात्मरूपेणैवैष पश्यति ॥ ६ ॥**

पुण्यपापयोरतापकत्वे हेतुप्रदर्शनपरं 'स य एवं विद्वानेते आत्मानँ स्पृणुते, उभे ह्येवैव एते आत्मानँ स्पृणुते' इति वाक्यद्वयमर्थतः पठति—**एवमिति** । स यः कश्चित्पुमानेवमुक्तेन प्रकारेण 'स यश्चायं पुरुषे यश्चासावादित्ये स एकः' इत्यनेन प्रकारेण विद्वाञ्जानन् प्रवर्तते स एते पुण्यपापे हित्वेत्यध्याहारः । आत्मानं ब्रह्माभिन्नं प्रत्यञ्चं स्पृणुते प्रीणयति । सदा स्मरेदित्यर्थः । यतः पुण्यपापयोर्मिथ्यात्वानुसंधानेन हानं कृतं अतस्तद्विषया चिन्तैव नास्ति कुतस्तन्निमित्तकस्ताप इत्यभिप्रायः । किंच एष विद्वानेते पूर्वोक्ते उभे पुण्यपापरूपे कर्मणी देहेन्द्रियादिप्रवृत्त्या जनिते

स्वात्मानुरूपेणैव 'इदं सर्वं यदयमात्मा' इत्यादिवाक्योक्तप्रकारेण पश्यति। जानातीत्यर्थः। अतः स्वात्माभिन्नत्वादप्यतापकत्वमिति भावः॥ ६॥

**भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः।**
**क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे॥ ७॥**

ननु 'नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि' इत्यादिशास्त्रसद्भावादनादौ संसारे बहुजन्मोपार्जितेषु पुण्यापुण्यलक्षणेषु कर्मस्वसंख्यातेषु अप्रसिद्धत्वेनात्मतयानुसंधानायोग्येषु सत्सु कथं तद्विषया चिन्ता न भवेदित्याशङ्क्य सनिदानानां तेषां तत्त्वज्ञानेन विनाशित्वान्न चिन्ताजनकत्वमित्यभिप्रायेण हृदयग्रन्थ्यादिनिवृत्तिपरं मुण्डकादिश्रुतिषु स्थितं वाक्यं पठति—**भिद्यत इति**। परावरे परमपि हिरण्यगर्भादिकं पदमवरं निकृष्टं यस्मात्तस्मिन् परात्मनि दृष्टे साक्षात्कृते अस्य साक्षात्कारवतो हृदयस्य बुद्धेश्चिदात्मनश्च ग्रन्थिवद् दृढसंश्लेषरूपत्वाद् ग्रन्थिरन्योन्याध्यासो भिद्यते विदीर्यते। विनश्यतीत्यर्थः। सर्वसंशयाः आत्मा देहादिव्यतिरिक्तो न वा, व्यतिरिक्तोऽपि कर्तृत्वादिधर्मयोगी न वा, अकर्तृत्वेऽपि तस्य ब्रह्मणो भेदोऽस्ति न वा, अभेदेऽपि तज्ज्ञानं कर्मादिसहितं मुक्तिसाधनं केवलं वेत्यादयः छिद्यन्ते द्वैधीक्रियन्ते। तत्त्वतः साक्षात्कृतस्य वस्तुनः

संशयविपर्ययविषयत्वादर्शनादिति भावः। कर्माणि संचितानि पुण्यापुण्यलक्षणानि क्षीयन्ते स्वनिदानाज्ञानविनाशेन विनश्यन्तीति ॥ ७ ॥

**तमेव विद्वानत्येति मृत्युं पन्था न चेतरः।**
**ज्ञात्वा देवं पाशहानिः क्षीणैः क्लेशैर्न जन्मभाक् ॥**

ननु 'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतꣳ समाः। एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे विद्यां चाविद्यां च यस्तद्वेदोभयꣳ सह। अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते' इत्यादि श्रुतेः 'कर्मणैव हि संसिद्धिमास्थिता जनकादयः। यथान्नं मधुसंयुक्तं मधु चान्नेन संयुतम्। एवं तपश्च विद्या च संयुक्तं भेषजं महत्' इत्यादिस्मृतेश्च केवलस्य वा ज्ञानसमुच्चितस्य वा कर्मणो मुक्तिहेतुत्वं स्यादित्याशङ्क्य उदाहृतवाक्यस्थलेऽपि तपःशब्दस्य पापनिवृत्तिपरत्वादाङ्शब्दस्य च पापनिवृत्तिपरत्वात् संसिद्धिशब्देन च ज्ञानसाधनचित्तशुद्ध्यभिधानाद्विद्याशब्देन चोपासनाया विवक्षितत्वाच्च कर्मणां मुक्तिसाधनत्वमित्यभिप्रायेण साधनान्तरनिषेधपरं 'तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' इति श्वेताश्वतरवाक्यमर्थतः पठति—**तमेवेति**। तं पूर्वोक्तं परमात्मानं विद्वानेव मृत्युं संसारमत्येति अतिक्रामति, इतरः समुच्चयरूपः केवलः कर्मरूपो

वा पन्था मार्गो मोक्षोपायो नच नैव विद्यते । ननूदाहृतासु श्रुतिष्वन्वयव्यतिरेकाभ्यामैहिकानिष्टनिवृत्तिरेव प्राधान्येनावभासते नामुष्मिकीत्याशङ्क्यामुष्मिकस्यानिष्टस्य भाविजन्मपूर्वकत्वात्तस्य सनिदानस्याभावप्रतिपादकं 'ज्ञात्वा देवं सर्वपाशापहानिः क्षीणैः क्लेशैर्जन्ममृत्युप्रहाणिः' इति श्वेताश्वतरवाक्यमर्थतः पठति—**ज्ञात्वेति** । देवं स्वप्रकाशं प्रत्यगभिन्नं ब्रह्म ज्ञात्वाऽपरोक्षतयानुभूय स्थितस्य कामक्रोधादीनां सर्वेषां पाशानां हानिर्भवति । तैः पाशशब्दाभिधेयैः रागादिभिः क्लेशैः क्षीणैर्नष्टैर्भाविजन्महेतुकर्मारम्भायोगाञ्च तन्न प्राप्नोतीत्यर्थः ॥ ८ ॥

**देवं मत्वा हर्षशोकौ जहात्यत्रैव धैर्यवान् ।**
**नैनं कृताकृते पुण्यपापे तापयतः क्वचित् ॥ ९ ॥**

ननु शोकतरणादिफलं श्रूयत एव नानुभूयते ज्ञानिनामपीष्टानिष्टप्राप्तिपरिहारार्थं प्रवृत्तिदर्शनादित्याशङ्क्य दृढापरोक्षज्ञानिनां तदभावप्रतिपादनपरम् 'अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति' इति कठश्रुतिवाक्यमर्थतः पठति—**देवमिति** । धैर्यवान्ब्रह्मचर्यादिसाधनसंपन्नो देवं चिदानन्दादिलक्षणं मत्वावगम्य अत्रैवास्मिन्नेव जन्मनि हर्षशोकौ जहाति । 'एतमेव तपेन्नैषा चिन्ता कर्माग्निसंभृता' इत्युक्तार्थे विशेषप्रदर्शनपरं 'न कृताकृते

पं० १४

तपतः' इति याज्ञवल्क्यब्राह्मणवाक्यमर्थतः पठति—**नैनमिति**। पूर्वमकृतं पुण्यं कृतं च पापं तत्त्वविदस्तापहेतुर्न भवतीत्युक्तम्। इह तु कृतमकृतं वा पुण्यं पापं वा तथाविधं तापकं न भवतीत्युच्यत इति विशेषः। तथाहि तापो नाम चित्तविकारविशेषः। पुण्यं कृतं सद्धर्षलक्षणं विकारमुत्पादयति अकृतं विषादं, पापं पुनस्तद्वैपरीत्येनाकृतं हर्षमुत्पादयति कृतं विषादं, तत्त्वविदस्तु उभे अप्युभयविकारहेतू न कदाचिद्भवतः अविक्रियब्रह्मरूपत्वज्ञानादित्यभिप्रायः॥ ९॥

**इत्यादिश्रुतयो बह्वयः पुराणैः स्मृतिभिः सह।**
**ब्रह्मज्ञानेऽनर्थहानिमानन्दं चाप्यघोषयन्॥ १०॥**

नन्वियन्त्येव वाक्यानि प्रमाणानि नेत्याह—**इत्यादिश्रुतय इति**। आदिशब्देन। 'इह चेदवेदीदथ सत्यमस्ति न चेदिहावेदीन्महती विनष्टिः। य एतद्विदुरमृतास्ते भवन्त्यथेतरे दुःखमेवापियन्ति। तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्, निचाय्य तं मृत्युमुखात्प्रमुच्यते' इत्याद्याः श्रुतयो गृह्यन्ते। 'सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि। संपश्यन्नात्मयाजी वै स्वाराज्यमधिगच्छति॥ क्षेत्रज्ञस्यात्मविज्ञानाद्विशुद्धिः परमा मता' इत्यादिपुराणस्मृतिवचनैः सह प्रमाणानीत्यर्थः। उदाहृतानां श्रुतिस्मृतिपुराणवाक्यानां सर्वेषां तात्पर्यमाह—**ब्रह्मज्ञान इति**॥१०॥

**आनन्दस्त्रिविधो ब्रह्मानन्दो विद्या सुखं तथा ।**
**विषयानन्द इत्यादौ ब्रह्मानन्दो विविच्यते ॥११॥**

ननु ब्रह्मानन्द इत्यानन्दपदस्य ब्रह्मपदेन विशेषणादानन्दान्तरमस्तीत्यवगम्यते । स कतिविधः कीदृशश्चानन्द इत्याकाङ्क्षायां तद्भेददर्शनपूर्वकं ब्रह्मानन्दविवेचनं प्रतिजानीते—**आनन्दमिति** । ब्रह्मानन्दो विद्यानन्दो विषयानन्द इत्यनेन प्रकारेणानन्दस्य त्रैविध्यमवगन्तव्यं तत्रेतरयोरानन्दयोः ब्रह्मानन्दमूलत्वादादावध्यायत्रयेण ब्रह्मानन्दो विभज्य प्रदर्श्यत इत्यर्थः ॥ ११ ॥

**भृगुः पुत्रः पितुः श्रुत्वा वरुणाद्ब्रह्मलक्षणम् ।**
**अन्नप्राणमनोबुद्धीस्त्यक्त्वानन्दं विजज्ञिवान् १२**

तत्रादौ तावत्तैत्तिरीयश्रुतिपर्यालोचनायामानन्दरूपं ब्रह्म अवगम्यते इत्यभिप्रायेण भृगुवल्ल्या अर्थं संक्षेपेण दर्शयति—**भृगुरिति** । भृगुनामकः पुत्रः पितुर्वरुणाख्याद्ब्रह्मलक्षणं 'यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत्प्रयन्त्यभिसंविशन्ति । तद्विजिज्ञासस्व तद्ब्रह्मेति' इत्येवंरूपं श्रुत्वा अन्नमयादिकोशेषु तल्लक्षणासंभवेन तेषामब्रह्मत्वं निश्चित्यानन्दं आनन्दमयकोशे पञ्चमावयवत्वेन 'ब्रह्मपुच्छं प्रतिष्ठा' इति श्रुतं बिम्बभूतमानन्दं ब्रह्मलक्षणयोजनया ब्रह्मत्वेन ज्ञातवानित्यर्थः ॥ १२ ॥

**आनन्दादेव भूतानि जायन्ते तेन जीवनम् ।**
**तेषां लयश्च तत्रातो ब्रह्मानन्दो न संशयः ॥ १३ ॥**

कथमानन्दे तल्लक्षणं योजितवानित्याशङ्क्य तद्योजना-प्रकारदर्शनपरम् 'आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते । आनन्देन जातानि जीवन्ति । आनन्दं प्रयन्त्यभिसंविशन्ति' इति वाक्यमर्थतः पठति—**आनन्दादिति** । ग्राम्यधर्मनिमित्तकानन्दादेव भूतानि प्राणिनो जायन्ते उत्पद्यन्ते, तेन विषयभोगादिनिमित्तकेनानन्देन जातानि जीवनं प्राप्नुवन्ति, तेषां प्राणिनां लयश्च तत्र तस्मिन्सुषुप्तिकालिके स्वस्वरूपभूते आनन्दे एव भवति, सुषुप्तावानन्दातिरेकेण कस्याप्यनुभवाभावादत आनन्दो ब्रह्मैव सर्वानुभवसिद्धत्वान्नात्र संशयः कर्तव्य इति भावः ॥ १३ ॥

**भूतोत्पत्तेः पुरा भूमा त्रिपुटीद्वैतवर्जनात् ।**
**ज्ञातृज्ञानज्ञेयरूपा त्रिपुटी प्रलये हि नो ॥ १४ ॥**

एवं तैत्तिरीयकश्रुतिपर्यालोचनया ब्रह्मण आनन्दरूपतां प्रदर्श्य छान्दोग्यश्रुतिपर्यालोचनयापि तां दिदर्शयिषुः सनत्कुमारनारदसंवादरूपे सप्तमाध्याये स्थितस्य भूमरूपब्रह्मप्रतिपादकस्य 'यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा' इत्यादिवाक्यस्यार्थं संक्षेपेणाह—**भूतोत्पत्तेरिति** । भूतानामाकाशादीनां तत्कार्याणां

जरायुजाण्डजादीनां चोत्पत्तेः पूर्वं त्रिपुटीद्वैतवर्जनात् त्रयाणां ज्ञातृज्ञानज्ञेयरूपाणां पुटानामाकाराणां समाहारस्त्रिपुटी सैव द्वैतं तस्य वर्जनमभावस्तस्माद्भूमा देशतः कालतो वस्तुतो वा परिच्छेदशून्यः परमात्मा 'भावानयने द्रव्यानयनम्' इति न्यायाद्भूमैवासीदित्यध्याहारः। तदेवद्वैतवर्जनमुपपादयति— **ज्ञातृज्ञानेति**। वक्ष्यमाणज्ञात्रादिरूपा त्रिपुटी प्रलयकाले नास्तीत्येतत्सर्ववेदान्तसंमतमिति हिशब्दं प्रयुञ्जानस्यायमभिप्रायः ॥ १४ ॥

**विज्ञानमय उत्पन्नो ज्ञाता ज्ञानं मनोमयः।**
**ज्ञेयाः शब्दादयो नैतत्त्रयमुत्पत्तितः पुरा ॥ १५ ॥**

इदानीं ज्ञात्रादिस्वरूपं दर्शयति—**विज्ञानमय इति**। परमात्मन उत्पन्नो बुद्ध्युपाधिको जीवो विज्ञानमयो ज्ञाता, मनोमयः मनसि प्रतिबिम्बितं मनोमयशब्दवाच्यं चैतन्यं ज्ञानं, शब्दस्पर्शादयो ज्ञेयाः प्रसिद्धाः, इदं त्रयं कार्यत्वादुत्पत्तेः पुरा कारणव्यतिरेकेण नास्तीत्यर्थः ॥ १५ ॥

**त्रयाभावे तु निर्द्वैतः पूर्ण एवानुभूयते।**
**समाधिसुप्तिमूर्च्छासु पूर्णः सृष्टेः पुरा तथा ॥१६॥**

फलितमाह—**त्रयेति**। ज्ञात्रादित्रयाभावे निर्द्वैतः द्वैतरहितः पूर्ण एवात्मानुभूयते। कुत्रानुभूयत इत्यत आह— **समाधीति**। विद्वदनुभवप्रदर्शनाय समाधिग्रहणं सर्वानु-

भवद्योतनाय सुषुप्तिमूर्च्छयोरुदाहरणं सुषुप्त्याद्युत्थितस्य द्वैता- दर्शनस्मरणान्यथानुपपत्त्या निर्द्वैतस्य तदनुभवितुः सिद्धि- रिति भावः। भवतु सुषुप्त्यादावद्वैतसिद्धिः प्रकृते किमायात- मित्यत आह—**पूर्ण इति**। यथा सुषुप्त्यादौ परिच्छेदका- भावात्पूर्णः तथा सृष्टेः पुरापि तदभावात्पूर्ण इत्यर्थः ॥१६॥

**यो भूमा स सुखं नाल्पे सुखं त्रेधा विभेदिनि।**
**सनत्कुमारः प्राहैवं नारदायातिशोकिने ॥ १७ ॥**

अस्तु ब्रह्मणः पूर्णत्वमानन्दरूपत्वे किमायातमित्याशङ्क्य अन्वयव्यतिरेकाभ्यां भूम्नः सुखरूपत्वप्रदर्शनपरं 'यो वै भूमा तत्सुखं नाल्पे सुखमस्ति' इति वाक्यमर्थतोऽनुक्रामति —**यो भूमेति**। यः पूर्वोक्तो भूमा स सुखरूप एव अद्वि- तीये दुःखहेतोरभावाद् अल्पे परिच्छिन्ने। तस्यैव विवरणं **त्रेधा विभेदिनीति** हेतुगर्भं विशेषणम्। सुखं तत्र न विद्यते इत्यर्थः। एवं कस्मै केनाभिहितमित्यत आह— **सनत्कुमार इति**। नारदस्य शिष्यत्वे कारणमाह— **अतिशोकिन इति**। अतिशयितः अधिकः शोकोऽस्या- स्तीत्यतिशोकी तस्मै ॥ १७ ॥

**सपुराणान्पञ्च वेदाञ्शास्त्राणि विविधानि च।**
**ज्ञात्वाप्यनात्मवित्त्वेन नारदोऽतिशुशोच ह॥१८॥**

तस्यातिशोकित्वे हेतुमाह—**सपुराणानिति**। नारदः

पुराणैः सह वर्तन्त इति सपुराणाः पञ्च वेदास्तान्विविधानि च शास्त्राणि विदित्वाप्यात्मज्ञानरहितत्वेनातिशयेन शोकं प्राप्तः ॥ १८ ॥

**वेदाभ्यासात्पुरा तापत्रयमात्रेण शोकिता ।**
**पश्चात्त्वभ्यासविस्मारभङ्गगर्वैश्च शोकिता ॥१९॥**

ननु वेदशास्त्रविषयकज्ञानस्य शोकनिवर्तकत्वेन प्रसिद्धस्य कथमतिशोकहेतुत्वमित्यत आह—**वेदाभ्यासादिति** । तापत्रयेण आध्यात्मिकादिलक्षणेनैव शोकिता शोकोऽस्यास्तीति शोकी तस्य भावस्तत्ता आसीदित्यध्याहारः । **पश्चात्त्विति** । तुशब्दो विशेषद्योतनार्थः । अभ्यासः पाठाद्यावर्तनं, विस्मारः पठितस्य विस्मरणं, भङ्गः स्वतोऽधिकेन तिरस्कारः, गर्वो न्यूनदर्शनेन स्वाधिक्यबुद्धिः, एतैः कारणैः शोकित्वम् ॥ १९ ॥

**सोऽहं विद्वन्प्रशोचामि शोकपारं नयात्र माम् ।**
**इत्युक्तः सुखमेवास्य पारमित्यभ्यधादृषिः ॥२०॥**

नन्वेवं सर्वज्ञस्यापि नारदस्यातिशोकित्वं जातमिति कुतोऽवगम्यत इत्याशङ्क्य 'सोऽहं भगवः शोचामि' इति तदीयादेव वाक्यादवगतमित्यभिप्रेत्य 'तं मा भगवाञ्शोकस्य पारं तारयतु' इति तन्निवृत्त्युपाये तेन पृष्टे सति सनत्कुमारो भूमशब्दवाच्यं सुखरूपं ब्रह्मैव ज्ञायमानं शोकनि-

वृत्त्युपाय 'इति सुखं त्वेव जिज्ञासितव्यम्' इत्यारभ्योत्तरग्रन्थसंदर्भेणोक्तवानित्याह—सोऽहमिति ॥ २० ॥

**सुखं वैषयिकं शोकसहस्रेणावृतत्वतः ।**
**दुःखमेवेति मत्वाह नाल्पेऽस्ति सुखमित्यसौ २१**

ननु स्रगादिजन्येषु सुखेषु बहुषु सत्सु नाल्पे सुखमस्तीत्युक्तिरनुपपन्नेति चेन्न, तेषां स्रगादीनां दुःखानुषङ्गेण विषसंपृक्तान्नवद्बहुदुःखरूपत्वस्य मुनिनाभिप्रेतत्वादित्याह—**सुखमिति** ॥ २१ ॥

**ननु द्वैते सुखं माभूदद्वैतेऽप्यस्ति नो सुखम् ।**
**अस्ति चेदुपलभ्येत तथा च त्रिपुटी भवेत् ॥२२॥**

द्वैते सुखाभावमङ्गीकृत्य अद्वैतेऽपि तमाशङ्कते—**नन्विति** । तत्रानुपलब्धिं प्रमाणयति—**अस्ति चेदिति** । अद्वैते यदि सुखं विद्यते तर्हि विषयसुखादिवदुपलभ्येत । यतो नोपलभ्यतेऽतो नास्तीत्यर्थः । ननूपलभ्यते इत्याशङ्कमानं प्रत्याह—**तथेति** । अनुभवस्य अनुभवित्रनुभाव्यसापेक्षत्वाद्वैतहानिरिति भावः ॥ २२ ॥

**मास्त्वद्वैते सुखं किंतु सुखमद्वैतमेव हि ।**
**किं मानमिति चेन्नास्ति मानाकाङ्क्षा स्वयंप्रभे २३**

अद्वैतस्य सुखाधिकरणत्वनिषेधमङ्गीकरोति सिद्धान्ती—**मास्त्वित्ति** । तत्र हेतुमाह—**किं त्विति** । हि यस्मा-

त्कारणादद्वैतमेव सुखम् । अतः सुखाधिकरणं न भवतीत्यर्थः । अद्वैतं सुखमित्यत्र किं प्रमाणमित्याशङ्कानुवादपूर्वकं तस्य स्वप्रकाशत्वात्प्रमाणप्रश्न एवानुपपन्न इत्याह—किं मानमिति ॥ २३ ॥

**स्वप्रभत्वे भवद्वाक्यं मानं यस्माद्भवानिदम् ।**
**अद्वैतमभ्युपेत्यास्मिन्सुखं नास्तीति भाषते ॥२४॥**

ननु स्वप्रकाशत्वेऽपि किं प्रमाणमित्याशङ्क्य त्वदीयमेव वचनं प्रमाणमित्याह—**स्वप्रभत्वे इति** । तदुपपादयति—**यस्मादिति** । यतः कारणाद्भवता प्रमाणनैरपेक्ष्येण अद्वैतमभ्युपेत्य सुखमेवाक्षिप्यते अतः स्वप्रभत्वमित्यर्थः ॥ २४ ॥

**नाभ्युपैम्यहमद्वैतं तद्वचोऽनूद्य दूषणम् ।**
**वच्मीति चेत्तदा ब्रूहि किमासीद्द्वैततः पुरा ॥२५॥**

न मया द्वैतमभ्युपगम्यते किंतु त्वदुक्तमद्वैतमनूद्य दूष्यतेऽतो नोक्तसिद्धिरिति शङ्कते—**नाभ्युपैमीति** । विकल्पासहत्वादद्वैतानभ्युपगमोऽनुपपन्न इति मन्वानः पृच्छति—**तदेति** ॥ २५ ॥

**किमद्वैतमुत द्वैतमन्यो वा कोटिरन्तिमः ।**
**अप्रसिद्धो न द्वितीयोऽनुत्पत्तेः शिष्यतेऽग्रिमः ॥**

किंशब्दसूचितं विकल्पं दर्शयति—**किमद्वैतमिति** ।

तृतीयं पक्षं निराकरोति—**अन्तिम इति**। द्वैताद्वैतविलक्षणस्य रूपस्य लोकेऽदर्शनादिति भावः। द्वितीयं पक्षं निराकरोति—**न द्वितीय इति**। तत्र हेतुमाह—**अनुत्पत्तेरिति**। द्वैतस्य तदानीमनुत्पन्नत्वादिति भावः। अतः प्रथमः पक्षः परिशिष्यत इत्याह—**शिष्यत इति** ॥ २६ ॥

**अद्वैतसिद्धिर्युक्त्यैव नानुभूत्येति चेद्वद।**
**निर्दृष्टान्ता सदृष्टान्ता वा कोट्यन्तरमत्र नो॥२७॥**

ननूक्तेन प्रकारेणाद्वैतं युक्त्यैव सिध्यति नानुभवेनेति चोदयति—**अद्वैतेति**। अद्वैतसिद्धिर्युक्त्यैवेत्युक्तं विकल्पासहत्वादनुपपन्नमिति मन्वानो युक्तिं विकल्पयति सिद्धान्ती—**वदेति**। विकल्पस्य न्यूनतां निराकरोति—**कोट्यन्तरमिति** ॥ २७ ॥

**नानुभूतिर्न दृष्टान्त इति युक्तिस्तु शोभते।**
**सदृष्टान्तत्वपक्षे तु दृष्टान्तं वद मे मतम् ॥ २८ ॥**

प्रथमं पक्षं सोपहासं निराकरोति—**नानुभूतिरिति**। अद्वैतसिद्धिर्युक्त्येवेति वदता अनुभूतिस्तावन्नाभ्युपेयते युक्तिस्तु दृष्टान्तप्रदर्शनमन्तरेण न किंचित्साधयति, अतो न दृष्टान्त इत्युक्तिरयुक्तेति भावः। द्वितीये विकल्पे उभयवादिसंप्रतिपन्नो दृष्टान्तो वक्तव्य इत्याह—**सदृष्टान्तेति** २८

**अद्वैतः प्रलयो द्वैतानुपलम्भेन सुप्तिवत्।**
**इति चेत्सुप्तिरद्वैतेत्यत्र दृष्टान्तमीरय ॥ २९ ॥**

तर्हि दृष्टान्तेनैवाद्वैतं साधयामीति शङ्कते पूर्ववादी—**अद्वैत इति**। प्रलयो द्वैतरहितो भवतुमर्हति द्वैतानुपलब्धिमत्त्वाद्, यो यो द्वैतानुपलब्धिमान्स स द्वैतरहितः यथा स्वाप इति। नन्वेवं साधयतस्तव स्वसुप्तिर्दृष्टान्तः परसुप्तिर्वा। आद्ये तस्याः परं प्रत्यसिद्धत्वेन तत्सिद्धये दृष्टान्तान्तरं वक्तव्यमित्याह—**सुप्तिरिति** ॥ २९ ॥

**दृष्टान्तः परसुप्तिश्चेदहो ते कौशलं महत्।**
**यः स्वसुप्तिं न वेत्त्यस्य परसुप्तौ तु का कथा ॥३०॥**

ननु तस्याः परसुप्तिरेव दृष्टान्त इति द्वितीयं विकल्पमाशङ्कते—**दृष्टान्त इति**। परसुप्तेस्तवाप्रसिद्धत्वेन त्वया दृष्टान्तीकरणमनुपपन्नमिति सोपहासमाह सिद्धान्ती—**अहो इति**। यो भवान् सुप्तेरनुभवगम्यत्वानङ्गीकारेण स्वसुप्तिमपि न वेत्ति अस्य तव परसुप्तौ का कथा। परसुप्तिज्ञानं न भवतीति किमु वक्तव्यमिति भावः ॥ ३० ॥

**निश्चेष्टत्वात्परः सुप्तो यथाहमिति चेत्तदा।**
**उदाहर्तुः सुषुप्तेस्ते स्वप्रभत्वं बलाद्भवेत् ॥ ३१ ॥**

नन्वनुमानात्परसुप्तिसिद्धिरिति शङ्कते—**निश्चेष्टत्वादिति**। विमतः परः सुप्तो भवितुमर्हति प्राणादिमत्त्वे सति निश्चेष्टत्वान्मद्वदित्यनुमानादित्यर्थः। एवं तर्हि तव सुप्तेः स्वप्रकाशत्वं परिशिष्यत इत्याह सिद्धान्ती—**तदेति**। तदा तर्हि

मां प्रति सुषुप्तिमुदाहर्तुं दृष्टान्तीकर्तुस्ते तव सुप्तेः स्वप्रभत्वं स्वप्रकाशत्वं बलात्सुप्त्युदाहरणसामर्थ्यादेव भवेत् ॥ ३१ ॥

**नेन्द्रियाणि न दृष्टान्तस्तथाप्यङ्गीकरोषि ताम् ।**
**इदमेव स्वप्रभत्वं यद्भानं साधनैर्विना ॥ ३२ ॥**

कथं बलाद्भवतीत्याशङ्क्याह—**नेन्द्रियाणीति** । सुप्तिग्राहकाणीन्द्रियाणि न सन्ति तेषां स्वकारणे विलीनत्वाद् दृष्टान्तश्च संप्रतिपन्नो नास्ति परसुप्तेरप्रसिद्धत्वस्योक्तत्वात्तथापि तां सुप्तिमङ्गीकरोषि । एवंच सति साधनैर्विना ज्ञानसाधनमन्तरेणापि भानं प्रकाशनमिति यदिदमेव स्वप्रभत्वं सुषुप्त्या इत्यर्थः । अत्रायं प्रयोगः—विमता सुप्तिः स्वप्रकाशा असत्स्वपि ज्ञानसाधनेषु प्रकाशमानत्वात् सांख्याभिमतात्मवत्प्रभाकराभिमतसंवेदनवत् शाक्याभिमतस्वात्मवच्चेत्यर्थः ॥ ३२ ॥

**स्तामद्वैतस्वप्रभत्वे वद सुप्तौ सुखं कथम् ।**
**शृणु दुःखं तदा नास्ति ततस्ते शिष्यते सुखम् ॥**

इत्थं प्रलयस्य दृष्टान्तत्वेनोदाहृतायाः सुषुप्तेरद्वैतत्वं स्वप्रभत्वं च प्रसाध्य तत्र सुखप्रसाधनाय पूर्वपक्षिण आकाङ्क्षामुत्थापयति—**स्तामिति** । सुखप्रतियोगिनो दुःखस्य तदानीमसत्वात्सुखमेव परिशिष्यत इत्याह—**शृण्विति** । सुखदुःखयोः प्रकाशतमसोरिव परस्परविरोधित्वाद् दुःखाभावे सुखमेवाभ्युपेयमिति भावः ॥ ३३ ॥

**अन्धः सन्नप्यनन्धः स्याद्विद्धोऽविद्धोऽथ रोग्यपि**
**अरोगीति श्रुतिः प्राह तच्च सर्वे जना विदुः ३४**

सुप्तौ दुःखाभावे किं मानमित्याकाङ्क्षायां श्रुत्यनुभवाविद्याह—**अन्ध इति**। 'तस्माद्वा एतं सेतुं तीर्त्वान्धः सन्ननन्धो भवति विद्धः सन्नविद्धो भवत्युपतापी सन्ननुपतापी भवति तद्यद्यपीदं भगवः शरीरमन्धं भवत्यनन्धः स भवति' इत्यादि श्रुतिर्देहाभिमानयुक्तानन्धत्वादीन्दोषान्सुप्तौ निवारयति। व्याध्यादिना पीड्यमानस्यापि सुप्तौ तद्दुःखानुभवो नास्तीत्येतत्सर्वजनप्रसिद्धं चेत्यर्थः ॥ ३४ ॥

**न दुःखाभावमात्रेण सुखं लोष्टशिलादिषु।**
**द्वयाभावस्य दृष्टत्वादिति चेद्विषमं वचः ॥ ३५॥**

ननु यत्र दुःखाभावस्तत्र सुखमित्यस्याः व्याप्तेर्लोष्टादौ व्यभिचार इति शङ्कते—**न दुःखेति**। दुःखाभावमात्रेण सुखं कल्पयितुं न शक्यते लोष्टशिलादिषु द्वयाभावस्य सुखदुःखयोरभावस्य दर्शनादित्यर्थः। दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यान्नैवमिति परिहरति—**विषममिति**। वचो दृष्टान्तवचनं विषमम्। दार्ष्टान्तिकाननुसारीत्यर्थः ॥ ३५ ॥

**मुखदैन्यविकासाभ्यां परदुःखसुखोहनम्।**
**दैन्याद्यभावतो लोष्टे दुःखाद्यूहो न संभवेत् ॥३६॥**

दृष्टान्तस्याननुकूलत्वमेवोपपादयति—**मुखेति**। अन्य-

इदानीं वाचारम्भणमित्याद्युदाहृतं वाक्यमर्थतः पठति—**वाङ्निष्पाद्यमिति**। वागिन्द्रियेणोच्चार्यं नाममात्रं नामैवास्य घटादेर्न सत्यता न नामातिरेकेण पारमार्थिकं रूपमस्ति किंतु तदाधारभूता मृदेव सत्येत्यर्थः ॥ ३९ ॥

**व्यक्ताव्यक्ते तदाधार इति त्रिष्वाद्ययोर्द्वयोः।**
**पर्यायः कालभेदेन तृतीयस्त्वनुगच्छति ॥ ४० ॥**

शक्तितत्कार्ययोरनृतत्वे तदाधारस्य सत्यत्वे च कारणमाह—**व्यक्तेति**। व्यक्तो घटादिलक्षणः कार्यः अव्यक्ता तत्कारणभूता शक्तिः ते व्यक्ताव्यक्ते तदाधारस्तयोराधारभूता मृत्तिकेत्येतेषु त्रिषु मध्ये आद्ययोः प्रथमोद्दिष्टयोर्द्वयोः कार्यशक्त्योः संबन्धिनौ यौ कालौ तयोर्भेदेन भेदस्य विद्यमानत्वात्पर्यायः क्रमेण भवनम्। तृतीयस्तदुभयाधारस्तु मृदादिरनुगच्छति उभयत्रानुवर्तते। अयं भावः—शक्तिकार्ययोः कादाचित्कत्वादनृतत्वमाधारस्य तु कालत्रयानुगामित्वात्सत्यत्वमिति ॥ ४० ॥

**निस्तत्त्वं भासमानं च व्यक्तमुत्पत्तिनाशभाक्।**
**तदुत्पत्तौ तस्य नामवाचा निष्पाद्यते नृभिः ॥४१॥**

इदानीं विकारस्यैवासत्यत्वे हेतुत्रयमाह—**निस्तत्त्वमिति**। व्यक्तं व्यक्तशब्दवाच्यं घटादिकार्यं स्वरूपेणासद्देवावभासते तथोत्पत्तिविनाशवदुपलभ्यते उत्पत्त्यनन्तरं वागिन्द्रियजन्यनामात्मकत्वेन व्यवह्रियते च ॥ ४१ ॥

**व्यक्ते नष्टेऽपि नामैतन्नृवक्त्रेष्वनुवर्तते ।**
**तेन नाम्ना निरूप्यत्वाद्व्यक्तं तद्रूपमुच्यते ॥ ४२ ॥**

किं च । **व्यक्त इति** । व्यक्ते कार्यरूपे नष्टेऽपि एतत्कार्यादभिन्नं नाम नृवक्त्रेषु नृणां शब्दप्रयोक्तॄणां मनुष्याणां वदनेष्वनुवर्तते । ततः किं तत्राह—**तेनेति** । व्यक्तं कार्यं तेन वाचा व्यवह्रियमाणेन नाम्ना शब्देन निरूप्यत्वाद्व्यवह्रियमाणत्वात्तद्रूपं तस्य नाम्नो रूपमेव रूपं यस्य तत्तथा नामात्मकमुच्यत इत्यर्थः । अयं भावः—विमतो घटः घटशब्दात्मको भवितुमर्हति घटशब्देन व्यवह्रियमाणत्वात् घटशब्दवदिति ॥ ४२ ॥

**निस्तत्त्वत्वाद्विनाशित्वाद्वाचारम्भणनामतः ।**
**व्यक्तस्य न तु तद्रूपं सत्यं किंचिन्मृदादिवत् ॥४३॥**

एवं हेतुत्रयं प्रसाध्येदानीमनुमानरचनाप्रकारं सूचयति—**निस्तत्त्वत्वादिति** । व्यक्तस्य घटादिरूपस्य कार्यस्य यत्पृथुबुध्नोदराकारं रूपमस्ति तत्किंचित्किमपि सत्यं न भवति निस्तत्त्वत्वान्निर्गतं तत्त्वं वास्तवरूपं यस्मात्तन्निस्तत्त्वं तस्य भावो निस्तत्त्वत्वं तस्मात्तथा विनाशित्वान्मृदि सत्यामेव विनाशप्रतियोगित्वात् वाचारम्भणनामतः वागिन्द्रियजन्यशब्दमात्रात्मकत्वात्त्रिष्वपि हेतुषु मृद्वदिति वैधर्म्यदृष्टान्तः । अत्रैवं प्रयोगः—घटादिरूपः

कार्यः असत्यो भवितुमर्हति निस्तत्त्वत्वात्, यदसत्यं न भवति न तन्निस्तत्त्वं यथा घटाद्युपादानं मृदिति केवलव्यतिरेकी एवमितरहेतुद्वयेऽपि योजनीयम् ॥ ४३ ॥

**व्यक्तकाले ततः पूर्वमूर्ध्वमप्येकरूपभाक् ।**
**सतत्त्वमविनाशं च सत्यं मृद्वस्तु कथ्यते ॥४४॥**

एवं विकारस्यासत्यत्वमुपपाद्येदानीं तदधिष्ठानरूपाया मृदः सत्यत्वमुपपादयति—**व्यक्तेति** । व्यक्तकाले स्थितिकाले, ततः पूर्वं व्यक्तोत्पत्तेः पूर्वस्मिन्काले, ऊर्ध्वमपि व्यक्तविनाशोत्तरकालेऽपि एकरूपभाक् एकाकारं सतत्त्वं तत्त्वेन वास्तवरूपेण सह वर्तत इति सतत्त्वमविनाशं विकारेण सह नाशरहितं यन्मृद्वस्तु तत्सत्यमिति कथ्यते । अत्रेदमनुमानम्—विमतं मृद्वस्तु सत्यं भवितुमर्हति सतत्त्वत्वात् आत्मवदित्यादि योज्यम् ॥ ४४ ॥

**व्यक्तं घटो विकारश्चेत्येतैर्नामभिरीरितः ।**
**अर्थश्चेदनृतः कस्मान्न मृद्बोधे निवर्तते ॥ ४५ ॥**

ननु घटादेः कार्यजातस्यासत्यत्वे तस्यारोपितरजतादेरिवाधिष्ठानज्ञानेन निवर्त्यता स्यादिति शङ्कते—**व्यक्तमिति** । व्यक्तमित्यादिभिस्त्रिभिः शब्दैरभिधीयमानो योऽर्थः कार्यरूपस्तस्य कारणातिरेकेणासत्त्वेऽङ्गीक्रियमाणे मृल्लक्षणकारणस्य ज्ञाने किं न तन्निवृत्तिः स्यादित्यर्थः॥४५॥

**निवृत्त एव यस्मात्ते तत्सत्यत्वमतिर्गता ।**
**ईदृङ्निवृत्तिरेवात्र बोधजा न त्वभासनम् ॥ ४६ ॥**

इष्टापत्तिरिति परिहरति—**निवृत्त इति** । तत्रोपपत्तिमाह—**यस्मादिति** । यस्मात्कारणात्तव घटादिविषयसत्यत्वबुद्धिर्नष्टाऽतः स निवृत्त एवेत्यर्थः । नन्वारोपितरजतादिरूपस्यैवाप्रतीतिरुपलभ्यते न सत्यत्वबुध्यपगम इत्याशङ्क्य तस्य निरुपाधिकभ्रमत्वादस्तु तथात्वमिह तु सोपाधिकभ्रमे सत्यत्वबुध्यपगम एव निवृत्तिः स्यादित्यभिप्रायेणाह—**ईदृगिति** । अत्र सोपाधिकभ्रमस्थले ईदृगेव सत्यत्वबुध्यपगमरूपैव बोधजा अधिष्ठानयाथात्म्यज्ञानजन्या निवृत्तिरभ्युपेया न त्वभासनं न स्वरूपाप्रतीतिरूपेत्यर्थः ॥ ४६ ॥

**पुमानधोमुखो नीरे भातोऽप्यस्ति न वस्तुतः ।**
**तटस्थमर्त्यवत्तस्मिन्नैवास्था कस्यचित्क्वचित् ॥४७॥**

एवं क्व दृष्टमित्यत आह—**पुमानिति** । जलेऽधोमुखत्वेन प्रतिभासमानोऽपि पुमान् परमार्थतो नास्ति । तत्रोपपत्तिमाह—**तटस्थेति** । कस्यचिद्विवेकिनोऽविवेकिनो वा तस्मिन्नधोमुखे पुरुषे तीरस्थपुरुष इव सत्यत्वाभिमानः क्वचिद्देशे काले वा नैवास्तीति ॥ ४७ ॥

**ईदृग्बोधे पुमर्थत्वं मतमद्वैतवादिनाम् ।**
**मृद्रूपस्यापरित्यागाद्विवर्तत्वं घटे स्थितम् ॥ ४८ ॥**

नन्वारोपितस्यासत्यत्वज्ञानमात्रान्न पुरुषार्थसिद्धिरित्याशङ्क्याह—**ईदृगिति** । अद्वैतवादे आत्मानन्दातिरिक्तस्य सर्वस्य मिथ्यात्वनिश्चये सत्यद्वितीयानन्दाभिव्यक्तिलक्षणः पुरुषार्थः सिध्यतीत्यभिप्रायः । ननु घटस्य मृद्विवर्तत्वे सिद्धे तज्ज्ञानाद्घटसत्यत्वबुद्धिर्निवर्तते नचैतदिदानीं सिद्धमित्याशङ्क्याह—**मृद्रूपस्येति** ॥ ४८ ॥

**परिणामे पूर्वरूपं त्यजेत्तत्क्षीररूपवत् ।**
**मृत्सुवर्णे निवर्तेते घटकुण्डलयोर्न हि ॥ ४९ ॥**

घटे मृद्रूपपरित्यागाभावेऽपि मृत्परिणामता घटस्य किं न स्यादित्याशङ्क्याह—**परिणाम इति** । यत्र क्षीरादौ परिणामोऽभ्युपगम्यते तत्र क्षीरादिभावस्य पूर्वरूपस्य त्याग उपलभ्यत इत्यर्थः । ननु विवर्ते पूर्वरूपापरित्यागः क्व दृष्ट इत्याशङ्क्य मृत्सुवर्णयोर्दृश्यत इत्याह—**मृत्सुवर्णे इति** । मृत्सुवर्णविवर्तयोर्घटकुण्डलयोर्निष्पन्नयोरपि तत्कारणभूतमृत्सुवर्णरूपे न निवर्तेते इति हि प्रसिद्धमित्यर्थः ॥४९॥

**घटे भग्ने न मृद्भावः कपालानामवेक्षणात् ।**
**मैवं चूर्णेऽस्ति मृद्रूपं स्वर्णरूपं त्वतिस्फुटम् ५०**

ननु घटस्य मृद्विवर्तत्वमनुपपन्नं घटनाशे पुनर्मृद्भावादर्शनादिति शङ्कते—**घट इति** । मृद्भावाभावे कारणमाह—**कपालानामिति** । कपालानामपि नाशे मृद्भा-

वोपलब्धिः स्यादिति परिहरति—**मैवमिति** । सुवर्णे त्वेतच्चोद्यमेवानवकाशमित्याह—**स्वर्णेति** ॥ ५० ॥

**क्षीरादौ परिणामोऽस्तु पुनस्तद्भाववर्जनात् ।**
**एतावता मृदादीनां दृष्टान्तत्वं न हीयते ॥ ५१ ॥**

ननु परिणामे दृष्टान्तत्वेनाभिहितानां क्षीरमृत्सुवर्णादीनां मध्ये यदि मृत्सुवर्णयोर्विवर्तदृष्टान्तत्वमङ्गीक्रियते तर्हि तद्वदेव क्षीरस्यापि तथात्वं स्यादित्याशङ्क्याह—**क्षीरादाविति** । तर्हि क्षीरवदेवावस्थान्तरमापद्यमानयोस्तयोर्विवर्तदृष्टान्तता न भवेदित्याशङ्क्याह—**एतावतेति** । एतावता क्षीरादेः परिणामित्वेन मृदादीनां सुवर्णादिनां दृष्टान्तत्वं विवर्तदृष्टान्तभावो न हीयते न नश्यति । अयमभिप्रायः—क्षीरस्य पूर्वरूपपरित्यागपुरःसरमवस्थान्तरप्राप्तिसद्भावात्परिणामित्वमेव, मृत्सुवर्णयोस्तु अवस्थान्तरोत्पत्तिसद्भावेऽपि पूर्वरूपपरित्यागाभावाद्विवर्ततापीति ॥ ५१ ॥

**आरम्भवादिनः कार्यमृदो द्वैगुण्यमापतेत् ।**
**रूपस्पर्शादयः प्रोक्ताः कार्यकारणयोः पृथक् ५२**

ननु मृत्सुवर्णयोः परिणामविवर्ताविवारम्भकत्वमपि किं नाङ्गीक्रियत इत्याशङ्क्याह—**आरम्भवादिन इति** । आरम्भवादिनो मते च कार्ये घटादिरूपे मृत्तिकादेर्द्रव्यस्य

द्वैगुण्यं कार्याकारेण कारणाकारेण च द्विगुणत्वमापद्येत मृदः। तथा च सति गुरुत्वादिद्वैगुण्यमप्यापद्येतेति भावः। कुत एतदित्याशङ्क्याह—**रूपेति**। रूपादीनां गुणानां कार्यकारणयोर्भेदस्य तैरेवाङ्गीकृतत्वादिति भावः ॥ ५२ ॥

**मृत्सुवर्णमयश्चेति दृष्टान्तत्रयमारुणिः।**
**प्राहातो वासयेत्कार्यानृतत्वं सर्ववस्तुषु ॥ ५३ ॥**

ननु मृत्सुवर्णयोः किं द्वयोरेव विवर्ते दृष्टान्तत्वं नेत्याह—**मृदिति**। अरुणस्य पुत्र उद्दालकाख्यः कश्चिदृषिः। 'यथा सोम्यैकेन मृत्पिण्डेन' इत्यारभ्य 'कार्ष्णायसमित्येव सत्यम्' इत्यन्तेन वाक्यसंदर्भेण कार्यस्यानृतत्वे मृत्सुवर्णायोरूपं दृष्टान्तत्रयमुक्तवानित्यर्थः। किमर्थमेवं दृष्टान्तत्रयमुक्तवानित्याशङ्क्याह—**अत इति**। यत एवं बहुषु मृदादिषु कार्यानृतत्वमुपलब्धमतो भूतभौतिकरूपेषु वस्तुषु कार्यानृतत्वं वासितं कुर्यादित्यर्थः ॥ ५३ ॥

**कारणज्ञानतः कार्यविज्ञानं चापि सोऽवदत्।**
**सत्यज्ञानेऽनृतज्ञानं कथमत्रोपपद्यते ॥ ५४ ॥**

ननु कार्यानृतत्वानुसंधानमपि किमर्थमुक्तमित्याशङ्क्य कारणज्ञानात्कार्यज्ञानसिद्धय इत्यभिप्रायेणाह-**कारणेति**। कारणस्य मृदादेर्ज्ञानात्कार्यजातस्य घटादेर्ज्ञानमपि 'यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्यात्' इत्या-

दिवाक्यजातेनोक्तवानित्यर्थः । ननु मृत्सुवर्णादिरूपस्य पारमार्थिकस्य कारणस्य विज्ञानात्तद्विलक्षणस्य घटरूपकार्यादेर्विज्ञानमनुपपन्नमिति शङ्कते—**सत्येति** ॥ ५४ ॥

**समृत्कस्य विकारस्य कार्यता लोकदृष्टितः ।**
**वास्तवोऽत्र मृदंशोऽस्य बोधः कारणबोधतः ५५**

कार्यस्य सत्यानृतांशद्वयरूपत्वात्कारणज्ञानात्कार्यगतसत्यांशज्ञानं भवतीत्यभिप्रायेणाह—**समृत्कस्येति** । समृत्कस्याधिष्ठानभूतमृत्सहितस्य विकारस्य आरोपितस्य घटादिरूपस्य कार्यता कार्यशब्दार्थत्वं लोकप्रसिद्धमित्यर्थः । भवत्वेवमेतावता कारणज्ञानात्कार्यज्ञानं न संभवतीति चोद्यस्य कः परिहारो जात इत्याशङ्क्याह । कार्यगतानृतांशज्ञानाभावेऽपि तद्गतसत्यांशज्ञानं भवत्येवेति परिहरति—**वास्तव इति** । अत्र कार्ये यो वास्तवमृदंशोऽस्ति अस्य वास्तवांशस्य बोधो ज्ञानं कारणज्ञानाद्भवतीत्यर्थः ५५

**अनृतांशो न बोद्धव्यस्तद्बोधानुपयोगतः ।**
**तत्त्वज्ञानं पुमर्थं स्यान्नानृतांशावबोधनम् ॥ ५६ ॥**

ननु कार्यगतसत्यांशवदनृतांशोऽपि बोद्धव्य इत्याशङ्क्य प्रयोजनाभावान्नैवमित्याह—**अनृतांश इति** । प्रयोजनाभावमेव दर्शयति—**तत्त्वज्ञानमिति** । तत्त्वस्याबाध्यस्य वस्तुनो ज्ञानं पुमर्थं पुंसो ज्ञातुः पुरुषस्यार्थः प्रयो-

जनं यस्मिन् तत्पुमर्थमिति बहुव्रीहिः । अनृतांशस्य विका-रस्यावबोधनं प्रयोजनवन्न भवतीत्यर्थः ॥ ५६ ॥

**तर्हि कारणविज्ञानात्कार्यज्ञानमितीरिते ।**
**मृद्बोधान्मृत्तिका बुद्धेत्युक्तं स्यात्कोऽत्र विस्मयः॥**

ननु कारणज्ञानात्कार्यज्ञानं भवतीत्येतच्छ्रोतृबुद्धौ चमत्कारहेतुर्भविष्यतीत्यभिप्रायेणोक्तं तदेतन्न संभवतीति शङ्कते—**तर्हीति** । कारणस्य मृदादेर्ज्ञानात्कार्यगतं मृदादिसत्यांशज्ञानं भवतीत्युक्ते मृज्ज्ञानात् मृदो ज्ञानमित्युक्तं भवति । एवंच सति शब्दत एव चमत्कारो नार्थत इत्यर्थः ॥ ५७ ॥

**सत्यं कार्येषु वस्त्वंशः कारणात्मेति जानतः ।**
**विस्मयो मास्त्विहाज्ञस्य विस्मयः केन वार्यते ५८**

ईदृग्विवेकवतां विस्मयाभावेऽपि तद्रहितानां विस्मयः स्यादेवेति परिहरति—**सत्यमिति** । कार्येषु घटादिषु विद्यमानो वास्तवोंऽशः कारणस्वरूपमेवेति ये जानन्ति तेषामाश्चर्यं मा भूदितरेषां तत्त्वज्ञानशून्यानां जायमानो विस्मयो न निवारयितुं शक्यत इत्यर्थः ॥ ५८ ॥

**आरम्भी परिणामी च लौकिकश्चैककारणे ।**
**ज्ञाते सर्वमतिं श्रुत्वा प्राप्नुवन्त्येव विस्मयम् ५९**

अज्ञस्य विस्मयो भवेदित्युक्तमेवार्थं प्रपञ्चयति—आर-

म्भीति। आरम्भो नाम समवाय्यसमवायिनिमित्ताख्यकारणेभ्यो भिन्नस्य कार्यस्योत्पत्तिस्तां यो वक्ति सोऽयमारम्भीत्युच्यते, पूर्वरूपपरित्यागेन रूपान्तरप्राप्तिलक्षणं परिणामं यो वक्ति स परिणामीत्युच्यते, प्रक्रियाद्वयमजानानो लोकव्यवहारमात्रपरो लौकिक इत्युच्यते, एषां त्रयाणामपि कारणस्यैकस्य ज्ञानादनेकेषां कार्याणां विज्ञानं भवतीति वाक्यश्रवणाद्विस्मयो भवेदेवेत्यर्थः ॥ ५९ ॥

**अद्वैतेऽभिमुखीकर्तुमेवात्रैकस्य बोधतः ।**
**सर्वबोधः श्रुतौ नैव नानात्वस्य विवक्षया ॥६०॥**

ननु यथाश्रुतमर्थं परित्यज्येत्थं व्याख्याने किं कारणमित्याशङ्क्य श्रुतेस्तत्र तात्पर्याभावादित्याह—**अद्वैत इति।** अद्वैतविज्ञाने शिष्यमभिमुखीकर्तुमेव छान्दोग्यश्रुतावेकस्य कारणस्य विज्ञानात्सर्वेषां कार्याणां विज्ञानमुक्तं न तु कार्याणामनेकेषां विज्ञानसिद्ध्यर्थमित्यभिप्रायः ॥ ६० ॥

**एकमृत्पिण्डविज्ञानात्सर्वमृन्मयधीर्यथा ।**
**तथैकब्रह्मबोधेन जगद्बुद्धिर्विभाव्यताम् ॥ ६१ ॥**

इदानीमेकविज्ञानेन सर्वविज्ञानदृष्टान्तप्रदर्शनपरस्य 'यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्यात्' इति वाक्यार्थनिरूपणपुरःसरं दार्ष्टान्तिकप्रदर्शनपरस्य 'उत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं

विज्ञातम्' इति वाक्यस्यार्थं प्रदर्शयन् प्रकृते फलितमाह—**एकमृत्पिण्डेनेति** । यथा घटशरावाद्युपादानस्यैकस्य मृत्पिण्डस्यावबोधात्तद्विकाराणां सर्वेषां घटादीनां बोधो भवति एवं सर्वोपादानस्यैकस्य ब्रह्मणो बोधात्तत्कार्यस्य कृत्स्नस्य जगतो बोधो भवतीत्यवगन्तव्यमित्यर्थः ॥ ६१ ॥

**सच्चित्सुखात्मकं ब्रह्म नामरूपात्मकं जगत् ।**
**तापनीये श्रुतं ब्रह्म सच्चिदानन्दलक्षणम् ॥ ६२ ॥**

ननु ब्रह्मजगतोः स्वरूपापरिज्ञाने ब्रह्मज्ञानाज्जगतो ज्ञानं भवतीत्येवं नावगन्तुं शक्यत इत्याशङ्क्य तदवगमाय तदुभयस्वरूपं दर्शयति—**सच्चिदिति** । ब्रह्मणः सच्चिदानन्दरूपत्वे किं प्रमाणमित्याशङ्क्य तापनीयादिश्रुतयः प्रमाणमित्यभिप्रायेणाह—**तापनीय इति** । उत्तरस्मिन् तापनीये आथर्वणिकैस्तावत् 'ब्रह्मैवेदं सर्वं सच्चिदानन्दमात्रम्' इत्यादिप्रदेशेषु ब्रह्मणः सच्चिदानन्दरूपत्वमुक्तमित्यर्थः ॥ ६२ ॥

**सद्रूपमारुणिः प्राह प्रज्ञानं ब्रह्म बह्वृचः ।**
**सनत्कुमार आनन्दमेवमन्यत्र गम्यताम् ॥ ६३ ॥**

आदिशब्देन विवक्षितानि श्रुत्यन्तराणि दर्शयति—**सद्रूपमिति** । अरुणपुत्रेणोद्दालकेन छान्दोग्यश्रुतौ 'सदेव सोम्येदमग्र आसीत्' इत्यादिना सद्रूपं ब्रह्म निरूपितं, तथा

बह्वृचा ऋक्शाखाध्यायिनः ऐतरेयोपनिषदि 'प्रज्ञा प्रतिष्ठा प्रज्ञानं ब्रह्म' इति प्रज्ञानरूपत्वं ब्रह्मणो दर्शयन्ति, एवं पूर्वोदाहृतायां छान्दोग्यश्रुतावेव सनत्कुमाराख्यो गुरुः नारदाख्यशिष्याय 'भूमा त्वेव विजिज्ञासितव्यः' इत्युपक्रम्य 'यो वै भूमा तत्सुखम्' इति भूमशब्दाभिधेयस्य ब्रह्मण आनन्दरूपत्वमुक्तवानित्यर्थः । उक्तन्यायमन्यत्राप्यतिदिशति—**एवमिति** । अन्यत्र तैत्तिरीयकादिश्रुतिषु 'आनन्दो ब्रह्मेति व्यजानात्' इत्यादिवाक्यैरानन्दरूपत्वादिकमुक्तमिति द्रष्टव्यमिति भावः ॥ ६३ ॥

**विचित्य सर्वरूपाणि कृत्वा नामानि तिष्ठति ।**
**अहं व्याकरवाणीमे नामरूपे इति श्रुतेः ॥ ६४ ॥**

सच्चिदानन्देष्विव नामरूपयोरपि श्रुतिं दर्शयति—**विचित्येति** । 'सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाभिवदन् यदास्ते' इति 'अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि' इति च स्रष्टव्ये जगन्निष्ठे नामरूपे श्रुत्या दर्शिते इत्यर्थः ॥ ६४ ॥

**अव्याकृतं पुरा सृष्टेरूर्ध्वं व्याक्रियते द्विधा ।**
**अचिन्त्यशक्तिर्मायैषा ब्रह्मण्यव्याकृताभिधा ६५**

तत्रैव श्रुत्यन्तरमुदाहरति—**अव्याकृतमिति** । बृहदारण्यकश्रुतौ 'तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यामेव

व्याक्रियतासौनामायमिदंरूप' इति सृष्टस्य जगतो नामरूपात्मकत्वं दर्शितमित्यर्थः। सृष्टेः पूर्वमिदं जगदव्याकृतमव्यक्तनामरूपात्मकमभूदूर्ध्वं सृष्ट्यवसरे द्विधा वाच्यवाचकभावेन व्याक्रियत व्यक्तीकृतमित्यर्थः। इदानीं 'तद्धेदं तर्ह्यव्याकृतमासीत्' इत्यत्राव्याकृतशब्दस्यार्थमाह—**अचिन्त्येति**। येयं ब्रह्मणि अचिन्त्यशक्तिर्मायाऽस्ति एषाऽव्याकृताभिधाऽस्मिन्वाक्येऽव्याकृतशब्देनाभिधीयत इत्यर्थः ॥६५॥

**अविक्रियब्रह्मनिष्ठा विकारं यात्यनेकधा।**
**मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् ॥६६॥**

तन्नामरूपाभ्यामेव व्याक्रियते इत्यस्यार्थमाह—**अविक्रियेति**। अविकारिणि ब्रह्मणि वर्तमाना सा अनेकधा भूतभौतिकप्रपञ्चरूपेण बहुधा विकारं परिणामं प्राप्नोति। माया ब्रह्मणि वर्तत इत्यत्र प्रमाणमाह—**मायां त्विति**। मायां पूर्वोक्तां प्रकृतिं प्रक्रियते अनयेति प्रकृतिरुपादानकारणं विद्याज्जानीयात्। मायिनं तस्या आश्रयत्वेन तद्वन्तं महेश्वरं मायानियामकं विद्यादित्यनुवर्तते उभयत्र। तुशब्दः परस्परवैलक्षण्यद्योतनार्थः ॥ ६६ ॥

**आद्योविकार आकाशः सोऽस्ति भात्यपि च प्रियः**
**अवकाशस्तस्य रूपं तन्मिथ्या न तु तत्रयम् ॥६७॥**

इदानीं मायोपहितस्य ब्रह्मणः प्रथमकार्यमाह—**आद्य इति**। तस्य कारणादागतं रूपत्रयमाह—**सोऽस्तीति**। सच्चिदानन्दरूप इत्यर्थः। तस्य प्रातिस्विकं रूपमाह—**अवकाश इति**। तस्य पूर्वस्माद्रूपत्रयाद्वैलक्षण्यमाह—**तन्मिथ्येति**। सदादिरूपत्रयं वास्तवमित्यर्थः ॥ ६७ ॥

**न व्यक्तेः पूर्वमस्त्येव न पश्चाच्चापि नाशतः।**
**आदावन्ते च यन्नास्ति वर्तमानेऽपि तत्तथा ६८**

तस्य चतुर्थरूपस्य मिथ्यात्वे हेतुमाह—**न व्यक्तेरिति**। ननूत्पत्तिविनाशयोर्मध्ये प्रतीयमानस्यावकाशस्य कथमसत्त्वमित्याशङ्क्याह—**आदाविति** ॥ ६८ ॥

**अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत।**
**अव्यक्तनिधनान्येवेत्याह कृष्णोऽर्जुनं प्रति ॥६९॥**

उक्तार्थे श्रीकृष्णवाक्यं प्रमाणयति—**अव्यक्तादीनीति** ॥ ६९ ॥

**मृद्वत्ते सच्चिदानन्दा अनुगच्छन्ति सर्वदा।**
**निराकाशे सदादीनामनुभूतिर्निजात्मनि ॥ ७० ॥**

सदादिरूपत्रयस्यावकाशसत्त्वे किं प्रमाणमित्याशङ्क्यानुभूतिरेव प्रमाणमित्याह—**मृद्वदिति**। मृद्वदिति दृष्टान्तः प्रदर्शनार्थः। घटादिषु यथा कालत्रयेऽपि मृदनुवर्तते तथा सदादिरूपत्रयं सर्वदानुगतमित्यर्थः। नन्वाकाशं विहाय

सदादिरूपत्रयं कथमनुभूतमित्याशङ्क्याह—निराकाश इति ॥ ७० ॥

**अवकाशे विस्मृतेऽथ तत्र किं भाति ते वद ।**
**शून्यमेवेति चेदस्तु नाम ताद्दग्विभाति हि ॥७१॥**

तदेवोपपादयति—**अवकाश इति** । पूर्ववादिनश्चोद्यमनुवदति—**शून्यमिति** । अङ्गीकृत्य परिहारमाह—**अस्त्विति** । शब्दतः शून्यमस्त्वर्थतस्त्ववकाशाभावविशेषणस्य विशेष्यत्वेन प्रतीयमानं किंचिदस्तीत्यभ्युपगन्तव्यमित्याह—**ताद्दगिति** । हिशब्दो लोकप्रसिद्धिद्योतनार्थः ॥ ७१ ॥

**ताद्दक्त्वादेव तत्सत्त्वमौदासीन्येन तत्सुखम् ।**
**आनुकूल्यप्रातिकूल्यहीनं यत्तन्निजं सुखम् ॥७२॥**

भवत्वेवं प्रकृते किमायातमित्याशङ्क्य विशेष्यत्वेन प्रतीयमानस्य स्वरूपमभ्युपेयमित्याह—**ताद्दक्त्वादिति** । तस्य सुखस्वरूपत्वमाह—**औदासीन्येनेति** । औदासीन्यविषयत्वात्तस्य सुखस्वरूपत्वमित्यर्थः । नन्वनुकूलत्वरहितस्य कथं सुखस्वरूपत्वमित्याशङ्क्याह—**आनुकूल्येति** ७२

**आनुकूल्ये हर्षधीः स्यात्प्रातिकूल्ये तु दुःखधीः ।**
**द्वयाभावे निजानन्दो निजदुःखं न तु क्वचित् ७३**

तदेवोपपादयति—**आनुकूल्य इति** । ननु निजान-

न्दवन्निजदुःखमपि किं न स्यादित्याशङ्क्य दुःखे निजरूपसिद्ध्यभावान्नैवमित्याह—**निजदुःखमिति** ॥ ७३ ॥

**निजानन्दे स्थिरे हर्षशोकयोर्व्यत्ययः क्षणात् ।**
**मनसः क्षणिकत्वेन तयोर्मानसतेष्यताम् ॥ ७४ ॥**

ननु निजानन्दस्य सदानन्दत्वात्सर्वदा हर्ष एव स्यात् न तु शोक इत्याशङ्क्य तस्य नित्यत्वेऽपि तद्ग्राहिणो मनसः क्षणिकत्वेन मानसयोरपि क्षणिकत्वमित्याह—**निजानन्द इति** ॥ ७४ ॥

**आकाशेऽप्येवमानन्दः सत्ताभाने तु संमते ।**
**वाय्वादिदेहपर्यन्तं वस्तुष्वेवं विभाव्यताम् ॥७५॥**

दृष्टान्ते सिद्धमर्थं दार्ष्टान्तिके योजयति—**आकाशेऽपीति** एवं निजात्मन्युक्तप्रकारेणेत्यर्थः । सत्ताभाने तु भवताप्यभ्युपगम्येते अतो नोपपादनीये इत्यर्थः । आकाशे प्रतिपादितोऽर्थो वाय्वादिशरीरान्तेष्वभ्युपगन्तव्य इत्याह—**वाय्वादीति** ॥ ७५ ॥

**गतिस्पर्शौ वायुरूपं वह्नेर्दाहप्रकाशने ।**
**जलस्य द्रवता भूमेः काठिन्यं चेति निर्णयः ७६**

तत्र वाय्वादीनामसाधारणधर्मान्दर्शयति—**गतिस्पर्शाविति** द्वाभ्याम् ॥ ७६ ॥

**असाधारण आकार ओषध्यन्नवपुष्ष्यपि ।**
**एवं विभाव्यं मनसा तत्तद्रूपं यथोचितम् ॥ ७७ ॥**

असाधारण इति स्पष्टम् ॥ ७७ ॥

**अनेकधा विभिन्नेषु नामरूपेषु चैकधा ।**
**तिष्ठन्ति सच्चिदानन्दा विसंवादो न कस्यचित् ७८**

फलितमाह—**अनेकधेति** ॥ ७८ ॥

**निस्तत्वे नामरूपे द्वे जन्मनाशयुते च ते ।**
**बुद्ध्या ब्रह्मणि वीक्षस्व समुद्रे बुद्बुदादिवत् ७९**

तर्हि प्रतीयमानयोर्नामरूपयोः का गतिरित्याशङ्क्य कल्पितत्वमेव गतिरित्याह—**निस्तत्त्व इति** । कल्पितत्वे हेतुः—**जन्मेति** ॥ ७९ ॥

**सच्चिदानन्दरूपेऽस्मिन्पूर्णे ब्रह्मणि वीक्ष्यते ।**
**स्वयमेवावजानाति नामरूपे शनैः शनैः ॥ ८० ॥**

ततः किमित्यत आह—**सच्चिदानन्देति** ॥ ८० ॥

**यावद्यावदवज्ञा स्यात्तावत्तावत्तदीक्षणम् ।**
**यावद्यावद्वीक्ष्यते तत्तावत्तावदुभे त्यजेत् ॥८१॥**

ब्रह्मज्ञानदार्ढ्यस्य द्वैतावज्ञापूर्वकत्वाच्छ्रवणादिवत् द्वैतावज्ञापि कर्तव्येत्याह—**यावदिति** ॥ ८१ ॥

**तदभ्यासेन विद्यायां सुस्थितायामयं पुमान् ।**
**जीवन्नेव भवेन्मुक्तो वपुरस्तु यथा तथा ॥ ८२ ॥**

उभयाभ्यासस्य फलमाह—**तदभ्यासेनेति** ॥ ८२ ॥

**तच्चिन्तनं तत्कथनमन्योन्यं तत्प्रबोधनम् ।**
**एतदेकपरत्वं च ब्रह्माभ्यासं विदुर्बुधाः ॥ ८३ ॥**

इदानीं ब्रह्माभ्यासस्वरूपमाह—**तच्चिन्तनमिति** ८३

**वासनानेककालीना दीर्घकालं निरन्तरम् ।**
**सादरं चाभ्यस्यमाने सर्वथैव निवर्तते ॥ ८४ ॥**

नन्वनादिकालमारभ्य प्रतिभासमानस्य द्वैतस्य कादाचित्केन ज्ञानाभ्यासेन कथं निवृत्तिरित्याशङ्क्य दीर्घकालनैरन्तर्येण सत्कारसेवितेनाभ्यासेन निवर्तत एवेत्याह—**वासनेति** ॥ ८४ ॥

**मृच्छक्तिवद्ब्रह्मशक्तिरनेकाननृतान्सृजेत् ।**
**यद्वा जीवगता निद्रा स्वप्नश्चात्र निदर्शनम् ॥८५॥**

ननु ब्रह्मण एकस्यानेकाकारजगद्धेतुत्वमनुपपन्नमित्याशङ्क्य मायासहितस्योपपद्यत इत्याह—**मृच्छक्तिवदिति ।** अनृतान् कार्याणीत्यर्थः । ननु मृच्छक्तेः सत्यत्वादनेकहेतुत्वाद्विषमो दृष्टान्त इत्याशङ्क्य पक्षान्तरमाह—**यद्वेति** ८५

**निद्राशक्तिर्यथा जीवे दुर्घटस्वप्नकारिणी ।**
**ब्रह्मण्येषा स्थिता माया सृष्टिस्थित्यन्तकारिणी ॥**

दृष्टान्तं विशदयति—**निद्रेति** । दार्ष्टान्तिकमाह—**ब्रह्मणीति** ॥ ८६ ॥

**स्वप्ने वियद्गतिं पश्येत्स्वमूर्धच्छेदनं यथा ।**
**मुहूर्ते वत्सरौघं च मृतपुत्रादिकं पुनः ॥ ८७ ॥**

दुर्घटकारित्वमेव दर्शयति—**स्वप्न इति** ॥ ८७ ॥

इदं युक्तमिदं नेति व्यवस्था तत्र दुर्लभा ।
यथा यथेक्ष्यते यद्यत्तत्तद्युक्तं तथा तथा ॥ ८८ ॥

स्वप्नस्य दुर्घटत्वे हेतुमाह—इदमिति ॥ ८८ ॥

ईदृशो महिमा दृश्यो निद्राशक्तेर्यदा तदा ।
मायाशक्तेरचिन्त्योऽयं महिमेति किमद्भुतम् ८९

उक्तमर्थं कैमुतिकन्यायेन स्पष्टयति—ईदृश इति ८९

शयाने पुरुषे निद्रा स्वप्नं बहुविधं सृजेत् ।
ब्रह्मण्येवं निर्विकारे विकारान्कल्पयत्यसौ ॥९०॥

अप्रयतमानब्रह्मनिष्ठाया मायाया जगद्धेतुत्वे दृष्टान्तमाह—शयान इति ॥ ९० ॥

खानिलाग्निजलोर्व्यण्डलोकप्राणिशिलादिकाः ।
विकाराः प्राणिधीष्वन्तश्चिच्छाया प्रतिबिम्बिता

मायया सृष्टान्पदार्थान्दर्शयति—खानिलेति । ननु पाञ्चभौतिकत्वेन साम्येऽपि केषांचिच्चेतवत्वं केषांचिज्जडत्वं कुत इत्याशङ्क्याह—प्राणीति । प्राणिशरीरेष्वन्तःकरणेषु चैतन्यप्रतिबिम्बनाच्चेतनत्वमितरत्र तदभावाज्जडत्वमित्यर्थः ९१

चेतनाचेतनेष्वेषु सच्चिदानन्दलक्षणम् ।
समानं ब्रह्म भिद्येते नामरूपे पृथक्पृथक् ॥९२॥

ननु चेतनाचेतनविभागश्चिद्रूपब्रह्मकृत एव किं न

स्यादित्याशङ्क्य ब्रह्मणः सर्वोपादनत्वेन सर्वत्र समत्वान्मैवमित्याह—**चेतनेति** ॥ ९२ ॥

**ब्रह्मण्येते नामरूपे पटे चित्रमिव स्थिते ।**
**उपेक्ष्य नामरूपे द्वे सच्चिदानन्दधीर्भवेत् ॥ ९३ ॥**

ब्रह्मणश्चिज्जडसाधारणत्वे हेतुमाह—**ब्रह्मणीति** । ब्रह्मणः सर्वकल्पनाधारत्वात्सर्वगतत्वमित्यर्थः । तत्कथमवगम्यत इत्याशङ्कायां कल्पितनामरूपत्यागेऽधिष्ठानं ब्रह्मावगम्यत इत्याह—**उपेक्ष्येति** ॥ ९३ ॥

**जलस्थेऽधोमुखे स्वस्य देहे दृष्टेऽप्युपेक्ष्य तम् ।**
**तीरस्थ एव देहे स्वे तात्पर्यं स्याद्यथा तथा ॥९४॥**

उक्तार्थे दृष्टान्तमाह—**जलस्थ इति** । नीरेऽधोमुखे देहे परिदृश्यमानेऽपि तत्रादरं परित्यज्य तीरस्थे स्वदेहे तद्विपरीते ममत्वबुद्धिर्यथा तथेत्यर्थः ॥ ९४ ॥

**सहस्रशो मनोराज्ये वर्तमाने सदैव तत् ।**
**सर्वैरुपेक्ष्यते यद्वदुपेक्षा नामरूपयोः ॥ ९५ ॥**

इदानीं सर्वजनप्रसिद्धं दृष्टान्तान्तरमाह—**सहस्रश इति** । उपेक्षा कर्तव्येति शेषः ॥ ९५ ॥

**क्षणे क्षणे मनोराज्यं भवत्येवान्यथान्यथा ।**
**गतं गतं पुनर्नास्ति व्यवहारो बहिस्तथा ॥ ९६ ॥**

प्रपञ्चवैचित्र्ये दृष्टान्तमाह—**क्षण इति** । दार्ष्टान्तिकमाह—**व्यवहार इति** ॥ ९६ ॥

**न बाल्यं यौवने लभ्यं यौवनं स्थाविरे तथा।**
**मृतः पिता पुनर्नास्ति नायात्येव गतं दिनम् ९७**

तदेव विवृणोति—**न बाल्यमिति** ॥ ९७ ॥

**मनोराज्याद्विशेषः कः क्षणध्वंसिनि लौकिके।**
**अतोऽस्मिन्भासमानेऽपि तत्सत्यत्वधियं त्यजेत्**

द्वैतक्षणिकत्वमुपसंहरति—**मनोराज्यादिति**। क्षणिकत्वसाधने प्रयोजनमाह—**अत इति** ॥ ९८ ॥

**उपेक्षिते लौकिके धीर्निर्विघ्ना ब्रह्मचिन्तने।**
**नटवत्कृत्रिमास्थायां निर्वहत्येव लौकिकम् ॥९९॥**

ननु लौकिकोपेक्षायां को लाभ इत्याशङ्क्य ब्रह्मणि धीः स्थिरा भवतीत्याह—**उपेक्षित इति**। तर्हि ज्ञानिनो व्यवहारः कथमित्याशङ्क्याह—**नटवदिति** ॥ ९९ ॥

**प्रवहत्यपि नीरेऽधः स्थिरा प्रौढशिला यथा।**
**नामरूपान्यथात्वेऽपि कूटस्थं ब्रह्म नान्यथा १००**

ननु ज्ञानिनो व्यवहाराभ्युपगमे विकारित्वं प्रसज्येतेत्याशङ्क्य बुद्धौ व्यवहारवत्यामपि तत्साक्ष्यात्मा निर्विकार इति सदृष्टान्तमाह—**प्रवहतीति**। उदके उपरि प्रवहत्यपि अधःस्थिता प्रौढा शिला यथा न चलति एवं बुद्धौ संसरन्त्यामपि न ज्ञानी संसरतीत्यर्थः ॥ १०० ॥

**निश्छिद्रे दर्पणे भाति वस्तुगर्भं बृहद्वियत्।**
**सच्चिद्घने तथा नाना जगद्गर्भमिदं वियत् १०१**

नन्वखण्डे ब्रह्मणि तद्विलक्षणस्य जगतः कथमवभासनमित्याशङ्क्य निश्छिद्रे दर्पणे सावकाशवस्तुनो यथा भानं तद्वदित्याह—**निश्छिद्र इति** ॥ १०१ ॥

**अदृष्ट्वा दर्पणं नैव तदन्तस्थेक्षणं तथा।**
**अमत्वा सच्चिदानन्दं नामरूपमतिः कुतः॥१०२॥**

नन्वदृश्ये ब्रह्मणि कथं जगत्प्रतीतिरित्याशङ्क्य सच्चिदानन्दप्रतीतिपुरःसरमेव जगत्प्रतीतिरिति सदृष्टान्तमाह—**अदृष्ट्वेति** ॥ १०२ ॥

**प्रथमं सच्चिदानन्दे भासमानेऽथ तावता।**
**बुद्धिं नियम्य नैवोर्ध्वं धारयेन्नामरूपयोः॥१०३॥**

ननु नामरूपयोरपि भासमानत्वात्कथं निर्विषयब्रह्मप्रतीतिरित्याशङ्क्य तद्बुद्ध्युपायमाह—**प्रथममिति** । सच्चिदानन्दे ब्रह्मणि कल्पितनामरूपात्मके प्रपञ्चे सच्चिदानन्दमात्रं बुद्ध्या गृहीत्वा नामरूपयोर्बुद्धिं न धारयेत् ॥ १०३ ॥

**एवं च निर्जगद्ब्रह्म सच्चिदानन्दलक्षणम्।**
**अद्वैतानन्द एतस्मिन्विश्राम्यन्तु जनाश्चिरम् १०४**

फलितमाह—**एवमिति** । एवं च सति निर्जगद्ब्रह्म सच्चिदानन्दलक्षणं भवतीत्यर्थः ॥ १०४ ॥

ब्रह्मानन्दाभिधे ग्रन्थे तृतीयोऽध्याय ईरितः।
अद्वैतानन्द एव स्याज्जगन्मिथ्यात्वचिन्तया १०५

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीम-
द्विद्यारण्यमुनिविरचिते ब्रह्मानन्दे अद्वै-
तानन्दो नाम तृतीयोऽध्यायः ३

इदानीमध्यायार्थमुपसंहरति—ब्रह्मानन्देति ॥ १०५॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यविद्यारण्य० श्रीराम-
कृष्णाख्यविदुषा विरचिता ब्रह्मानन्दे अद्वैतानन्द-
व्याख्या समाप्ता ॥ १३ ॥

# ब्रह्मानन्दे विद्यानन्दप्रकरणम् १४



**योगेनात्मविवेकेन द्वैतमिथ्यात्वचिन्तया ।**
**ब्रह्मानन्दं पश्यतोऽथ विद्यानन्दो निरूप्यते ॥ १ ॥**

इदानीं वृत्तवर्तिष्यमाणयोर्ग्रन्थयोः संबन्धमाह—**योगेनेति** ॥ १ ॥

**विषयानन्दवद्विद्यानन्दो धीवृत्तिरूपकः ।**
**दुःखाभावादिरूपेण प्रोक्त एष चतुर्विधः ॥ २ ॥**

विद्यानन्दस्वरूपमाह—**विषयेति** । तस्यावान्तरभेदमाह—**दुःखाभावेति** ॥ २ ॥

**दुःखाभावश्च कामाप्तिः कृतकृत्योऽहमित्यसौ ।**
**प्राप्तप्राप्योऽहमित्येव चातुर्विध्यमुदाहृतम् ॥ ३ ॥**

चातुर्विध्यमेव दर्शयति—**दुःखाभावश्चेति** ॥ ३ ॥

**ऐहिकं चामुष्मिकं चेत्येवं दुःखं द्विधेरितम् ।**
**निवृत्तिमैहिकस्याह बृहदारण्यकं वचः ॥ ४ ॥**

निवर्तनीयं दुःखं विभजते—**ऐहिकमिति** । ऐहिकस्य निवृत्तिर्बृहदारण्यकवाक्येनोच्यत इत्याह—**निवृत्तिमिति** ॥ ४ ॥

**आत्मानं चेद्विजानीयादहमस्मीति पूरुषः ।**
**किमिच्छन्कस्य कामाय शरीरमनुसंज्वरेत् ॥ ५ ॥**

तच्छ्रुतिवाक्यं पठति—**आत्मानमिति** ॥ ५ ॥

**जीवात्मा परमात्मा चेत्यात्मा द्विविध ईरितः ।**
**चित्तादात्म्यात्त्रिभिर्देहैर्जीवः सन्भोक्तृतां व्रजेत् ६**

आत्मनि शोकसंबन्धं दर्शयितुं तद्भेदमाह—**जीवात्मेति** । आत्मनो जीवत्वे निमित्तमाह—**चित्तादात्म्यादिति** । चैतन्यस्य स्थूलसूक्ष्मकारणरूपैस्त्रिभिः शरीरैस्तादात्म्यभ्रमे सति चितो भोक्तृत्वं भवति स भोक्ता जीव इत्युच्यते ॥ ६ ॥

**परात्मा सच्चिदानन्दस्तादात्म्यं नामरूपयोः ।**
**गत्वा भोग्यत्वमापन्नस्तद्विवेके तु नोभयम् ॥ ७ ॥**

इदानीं परमात्मनः स्वरूपमाह—**परात्मेति** । तस्य भोग्यरूपत्वापत्तिप्रकारमाह—**तादात्म्यमिति** । नामरूपकल्पनाधिष्ठानत्वेन तत्तादात्म्यं प्राप्य भोग्यत्वमश्नुत इत्यर्थः । भोक्तृत्वाद्यभावे कारणमाह—**तद्विवेक इति** । ताभ्यां शरीरत्रयजगद्भ्यां विवेके भेदज्ञाने जाते सति नोभयम् । भोक्तृभोग्यरूपं नास्तीत्यर्थः ॥ ७ ॥

**भोग्यमिच्छन्भोक्तुरर्थे शरीरमनुसंज्वरेत् ।**
**ज्वरास्त्रिषु शरीरेषु स्थिता न त्वात्मनो ज्वराः ८**

उक्तमर्थं विवृणोति—**भोग्यमिति** ॥ ८ ॥

**व्याधयो धातुवैषम्ये स्थूलदेहे स्थिता ज्वराः ।**
**कामक्रोधादयः सूक्ष्मे द्वयोर्बीजं तु कारणे ॥ ९ ॥**

कस्मिन् शरीरे को ज्वर इत्याशङ्क्य स्थूलदेहे विद्यमानाञ्ज्वरान्दर्शयति—**व्याधय इति** । लिङ्गदेहकारणदेहगताञ्ज्वरानाह—**कामेति** ॥ ९ ॥

**अद्वैतानन्दमार्गेण परात्मनि विवेचिते ।**
**अपश्यन्वास्तवं भोग्यं किंनामेच्छेत्परात्मवित् १०**

इदानीमुदाहृतश्रुतितात्पर्यकथनव्याजेन पूर्वोक्तमेवार्थं विशदयति—**अद्वैतेति** । तृतीयाध्यायोक्तप्रकारेण मायाकार्यनामरूपाभ्यां सच्चिदानन्दे परमात्मनि विवेचिते भेदेन ज्ञाते सति सर्वं प्रपञ्चं मिथ्येति जानन् किं नाम भोग्यमिच्छति॥१०॥

**आत्मानन्दोक्तरीत्यास्मिञ्जीवात्मन्यवधारिते ।**
**भोक्ता नैवास्ति कोऽप्यत्र शरीरे तु ज्वरः कुतः ११**

ततः पूर्वाध्यायोक्तरीत्या जीवात्मस्वरूपे असङ्गकूटस्थचैतन्यरूपे निश्चिते सति कामयितुरभावाज्ज्वरादिसंबन्धो नास्तीत्याह—**आत्मानन्देति** ॥ ११ ॥

**पुण्यपापद्वये चिन्ता दुःखमामुष्मिकं भवेत् ।**
**प्रथमाध्याय एवोक्तं चिन्ता नैनं तपेदिति ॥ १२ ॥**

इदानीमामुष्मिकं ज्वरं दर्शयति—**पुण्येति** । तस्याभावः प्रथमाध्याये निरूपित इत्याह—**प्रथमेति** ॥ १२ ॥

**यथा पुष्करपर्णेऽस्मिन्नपामश्लेषणं तथा ।**
**वेदनादूर्ध्वमागामिकर्मणोऽश्लेषणं बुधे ॥ १३ ॥**

ननु ज्ञानिन आरब्धकर्मविषया चिन्ता मा भूदागामिकर्मविषया चिन्ता भवत्येवेत्याशङ्क्य 'तद्यथा पुष्करपर्णे' इत्यादिश्रुत्या ज्ञानिनि आगामिकर्मसंबन्धनिराकरणात्तद्विषयापि चिन्ता नास्तीत्याह—**यथेति** ॥ १३ ॥

**इषीकातृणतूलस्य वह्निदाहः क्षणाद्यथा ।**
**तथा संचितकर्मास्य दग्धं भवति वेदनात् ॥१४॥**

'तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्ते' इति श्रुत्यवष्टम्भेन संचितकर्मविषयापि चिन्ता ज्ञानिनो नास्तीत्याह—**इषीकेति** ॥ १४ ॥

**यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन ।**
**ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा ॥१५॥**

उक्तार्थे भगवद्वाक्यमपि प्रमाणयति—**यथैधांसीति** ॥ १५ ॥

**यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते ।**
**हत्वापि स इमाँल्लोकान्न हन्ति न निबध्यते ॥१६॥**

**यस्य नाहमिति** ॥ १६ ॥

**मातापित्रोर्वधः स्तेयं भ्रूणहत्यान्यदीदृशम् ।**
**न मुक्तिं नाशयेत्पापं मुखकान्तिर्न नश्यति॥१७॥**

अस्मिन्नेवार्थे 'न मातृवधेन न पितृवधेन न स्तेयेन न भ्रूणहत्यया नास्य पापं चन चक्रुषो मुखान्नीलं वेति' इति

कौषीतकिश्रुतिवाक्यमर्थतः पठति—**मातापित्रोरिति**। चनेत्येकं पदम्। नीलमिति कान्तिरित्यर्थः॥ १७॥

**दुःखाभाववदेवास्य सर्वकामाप्तिरीरिता।**
**सर्वान्कामानसावाप्त्वा ह्यमृतोऽभवदित्यतः १८**

उक्तचातुर्विध्यमध्ये द्वितीयप्रकारमाह—**दुःखेति**। ईरिता श्रुत्येति शेषः। अस्मिन्नर्थे ऐतरेयश्रुतिवाक्यमर्थतः पठति—**सर्वानिति**॥ १८॥

**जक्षन्क्रीडन्रतिं प्राप्तः स्त्रीभिर्यानैस्तथेतरैः।**
**शरीरं न स्मरेत्प्राणः कर्मणा जीवयेदमुम्॥ १९॥**

'जक्षन्क्रीडन्रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वाऽज्ञातिभिर्वा वयस्यैर्वा नोपजनं स्मरन्निदं शरीरम्' इति छान्दोग्यश्रुतिवाक्यमर्थतः पठति—**जक्षन्निति**॥ १९॥

**सर्वान्कामान्सहाप्नोति नान्यवज्जन्मकर्मभिः।**
**वर्तन्ते श्रोत्रिये भोगा युगपत्क्रमवर्जिताः॥२०॥**

तत्रैव तैत्तिरीयश्रुतिवाक्यमर्थतः पठति—**सर्वानिति**। ननु कर्मफलभोगाङ्गीकारे जन्मापि प्रसज्येतेत्याशङ्क्याह—**नान्यवदिति**। ज्ञानेन संचितकर्मणां दग्धत्वादज्ञवज्जन्म नास्तीत्यर्थः॥ २०॥

**युवा रूपी च विद्यावान्नीरोगो दृढचित्तवान्।**
**सैन्योपेतः सर्वपृथ्वीं वित्तपूर्णां प्रपालयन्॥२१॥**

इदानीं तैत्तिरीयबृहदारण्यकवाक्यं संक्षिप्यार्थतः पठति —युवेति ॥ २१ ॥

**सर्वैर्मानुष्यकैर्भोगैः संपन्नस्तृप्तभूमिपः ।**
**यमानन्दमवाप्नोति ब्रह्मविच्च तमश्नुते ॥ २२ ॥**

ननु सार्वभौमादिहिरण्यगर्भान्तानां जीवनिष्ठानामानन्दानां कथं ज्ञानिनि संभव इत्याशङ्क्य सर्वेषामानन्दानां ज्ञानिनावगतब्रह्मांशत्वात्संभव इत्याह—**सर्वैरिति** ॥ २२ ॥

**मर्त्यभोगे द्वयोर्नास्ति कामस्तृप्तिरतः समा ।**
**भोगान्निष्कामतैकस्य परस्यापि विवेकतः ॥२३॥**

ननु सार्वभौमश्रोत्रिययोर्विषयप्राप्तिसाम्याभावात्कथमानन्दसाम्यमित्याशङ्क्य नैरपेक्ष्यसाम्यात्तृप्तिसाम्यमित्याह—**मर्त्येति** । तृप्तिसाम्ये हेतुमाह—**भोगादिति** ॥ २३ ॥

**श्रोत्रियत्वाद्वेदशास्त्रैर्भोगदोषानवेक्षते ।**
**राजा बृहद्रथो दोषांस्तान्गाथाभिरुदाहरत् ॥२४॥**

विवेकत इत्युक्तमर्थं विवृणोति—**श्रोत्रियत्वादिति** । विषयदोषाः कस्यां शाखायां केन निरूपिता इत्याशङ्क्य बृहद्रथेन मैत्रायणीयाख्यशाखायां गाथाभिरुक्ता इत्याह—**राजेति** ॥ २४ ॥

**देहदोषांश्चित्तदोषान्भोग्यदोषाननेकशः ।**
**शुना वान्ते पायसे नो कामस्तद्वद्विवेकिनः ॥२५॥**

विवेकिनः कामानुदये दृष्टान्तान्तरमाह—**शुनेति** २५

**निष्कामत्वे समेऽप्यत्र राज्ञः साधनसंचये ।**
**दुःखमासीद्भाविनाशादतिभीरनुवर्तते ॥ २६ ॥**

सार्वभौमाच्छ्रोत्रियस्याधिक्यमाह—**निष्कामत्व इति ॥**

**नोभयं श्रोत्रियस्यातस्तदानन्दोऽधिकोऽन्यतः ।**
**गन्धर्वानन्द आशास्ति राज्ञो नास्ति विवेकिनः ॥**

सार्वभौमत्वं साधनसाध्यं पश्चाच्च तन्नाशभीतिश्चेति दोषद्वयत्वाच्छ्रोत्रिये तु तदुभयाभावादाधिक्यमित्यर्थः । श्रोत्रियस्याधिक्यान्तरमाह—**गन्धर्वेति** ॥ २७ ॥

**अस्मिन्कल्पे मनुष्यः सन्पुण्यपाकविशेषतः ।**
**गन्धर्वत्वं समापन्नो मर्त्यगन्धर्व उच्यते ॥ २८ ॥**

इदानीं गन्धर्वानन्दे द्वैविध्यं दर्शयितुं श्लोकद्वयेन गन्धर्वभेदमाह—**अस्मिन्निति** ॥ २८ ॥

**पूर्वकल्पे कृतात्पुण्यात्कल्पादावेव चेद्भवेत् ।**
**गन्धर्वत्वं तादृशोऽत्र देवगन्धर्व उच्यते ॥ २९ ॥**

**पूर्वेति** ॥ २९ ॥

**अग्निष्वात्तादयो लोके पितरश्चिरवासिनः ।**
**कल्पादावेव देवत्वं गता आजानदेवताः ॥ ३० ॥**

चिरलोकपित्रानन्दप्रदर्शनाय चिरलोकपितॄनाह—**अग्नि-**

ष्वात्तादय इति। देवानन्दत्रैविध्यज्ञानाय देवभेदमाह —कल्पादाविति ॥ ३० ॥

**अस्मिन्कल्पेऽश्वमेधादि कर्म कृत्वा महत्पदम्।**
**अवाप्याजानदेवैर्याः पूज्यास्ताः कर्मदेवताः॥३१॥**

**अस्मिन्कल्प इति ॥ ३१ ॥**

**यमाग्निमुख्या देवाः स्युर्ज्ञाताविन्द्रबृहस्पती।**
**प्रजापतिर्विराट् प्रोक्तो ब्रह्मा सूत्रात्मनामकः ३२**

**यमाग्नीति।** इन्द्रबृहस्पती प्रसिद्धावित्यर्थः ॥ ३२ ॥

**सार्वभौमादिसूत्रान्ता उत्तरोत्तरकामिनः।**
**अवाङ्मनसगम्योऽयमात्मानन्दस्ततः परः॥३३॥**

सार्वभौमादिसूत्रान्तानां श्रोत्रियान्न्यूनत्वद्योतनायाह— **सार्वभौमादीति।** एभ्यः सर्वेभ्योऽधिकमानन्दमाह— **अवाङ्मनसेति।** यतोऽयमात्मानन्दः अवाङ्मनसगम्यः अत एभ्यः सर्वेभ्योऽधिक इत्यर्थः ॥ ३३ ॥

**तैस्तैः काम्येषु सर्वेषु सुखेषु श्रोत्रियो यतः।**
**निःस्पृहस्तेन सर्वेषामानन्दाः सन्ति तस्य ते ३४**

इदानीं सर्वेषामानन्दाः श्रोत्रिये विद्यन्ते तस्य तेषु निःस्पृहत्वादित्याह—**तैस्तैरिति** ॥ ३४ ॥

**सर्वकामाप्तिरेषोक्ता यद्वा साक्षिचिदात्मना।**
**स्वदेहवत्सर्वदेहेष्वपि भोगानवेक्षते ॥ ३५ ॥**

उपपादितमर्थमुपसंहरति—**सर्वैति**। इदानीं पक्षान्तरमाह—**यद्वेति**। यथा स्वदेहे आनन्दाकारबुद्धिसाक्षित्वेनानन्दित्वमितरेष्वपि देहेषु तद्वदित्यर्थः ॥ ३५ ॥

**अज्ञस्याप्येतदस्त्येव न तु तृप्तिरबोधतः।**
**यो वेद सोऽश्नुते सर्वान्कामानित्यब्रवीच्छ्रुतिः॥३६**

ननूक्तप्रकारेणाज्ञस्यापि सर्वानन्दप्राप्तिरस्तीत्याशङ्क्य सर्वेषु सर्वबुद्धिसाक्ष्यहमिति ज्ञानाभावान्नैवमित्याह—**अज्ञस्येति**। उक्तार्थे तैत्तिरीयश्रुतिं प्रमाणयति—**यो वेदेति**। गुहायां निहितं ब्रह्म यो वेद सोऽश्नुत इति योजना ॥ ३६ ॥

**यद्वा सर्वात्मतां स्वस्य साम्ना गायति सर्वदा।**
**अहमन्नं तथान्नादश्चेति साम ह्यधीयते ॥ ३७ ॥**

इदानीं तृतीयप्रकारमाह—**यद्वेति**। इमांल्लोकान्कामान्नीकामरूप्यनुसंचरन्नित्यादिनेत्यर्थः ॥ ३७ ॥

**दुःखभावश्च कामाप्तिरुभे ह्येवं निरूपिते।**
**कृतकृत्यत्वमन्यच्च प्राप्तप्राप्यत्वमीक्षताम् ॥ ३८ ॥**

अतीतग्रन्थेन सिद्धमर्थं संक्षिप्याह—**दुःखेति** ॥३८॥

**उभयं तृप्तिदीपे हि सम्यगस्माभिरीरितम्।**
**त एवात्रानुसंधेयाः श्लोका बुद्धिविशुद्धये ॥३९॥**

अवशिष्टं कृतकृत्यत्वं प्राप्तप्राप्यत्वमित्युभयं तृप्तिदीपे द्रष्टव्यमित्याह—**त एवेति** ॥ ३९ ॥

ऐहिकामुष्मिकव्रातसिद्ध्यै मुक्तेश्च सिद्धये ।
बहुकृत्यं पुरास्याभूत्तत्सर्वमधुना कृतम् ॥ ४० ॥
तदेतत्कृतकृत्यत्वं प्रतियोगिपुरःसरम् ।
अनुसंदधदेवायमेवं तृप्यति नित्यशः ॥ ४१ ॥
दुःखिनोऽज्ञाः संसरन्तु कामं पुत्राद्यपेक्षया ।
परमानन्दपूर्णोऽहं संसरामि किमिच्छया ॥४२॥
अनुतिष्ठन्तु कर्माणि परलोकयियासवः ।
सर्वलोकात्मकः कस्मादनुतिष्ठामि किं कथम् ४३
व्याचक्षतां ते शास्त्राणि वेदानध्यापयन्तु वा ।
येऽत्राधिकारिणो मेतु नाधिकारोऽक्रियत्वतः४४
निद्राभिक्षे स्नानशौचे नेच्छामि न करोमि च ।
द्रष्टारश्चेत्कल्पयन्ति किं मे स्यादन्यकल्पनात् ४५
गुञ्जापुञ्जादि दह्येत नान्यारोपितवह्निना ।
नान्यारोपितसंसारधर्मानेवमहं भजे ॥ ४६ ॥
शृण्वन्त्वज्ञाततत्त्वास्ते जानन्कस्माच्छृणोम्यहम् ।
मन्यन्तां संशयापन्ना न मन्येऽहमसंशयः ॥४७॥
विपर्यस्तो निदिध्यासेत्किं ध्यानमविपर्यये ।
देहात्मत्वविपर्यासं न कदाचिद्भजाम्यहम् ॥४८॥
अहं मनुष्य इत्यादिव्यवहारो विनाप्यमुम् ।
विपर्यासं चिराभ्यस्तवासनातोऽवकल्पते ॥ ४९ ॥

आरब्धकर्मणि क्षीणे व्यवहारो निवर्तते ।
कर्माक्षये त्वसौ नैव शाम्येद्ध्यानसहस्रतः ॥५०॥
विरलत्वं व्यवहृतेरिष्टं चेद्ध्यानमस्तु ते ।
अबाधिकां व्यवहृतिं पश्यन्ध्यायाम्यहं कुतः ५१
विक्षेपो नास्ति यस्मान्मे न समाधिस्ततो मम ।
विक्षेपो वा समाधिर्वा मनसः स्याद्विकारिणः ५२
नित्यानुभवरूपस्य को मेऽत्रानुभवः पृथक् ।
कृतं कृत्यं प्रापणीयं प्राप्तमित्येव निश्चयः ॥५३॥
व्यवहारो लौकिको वा शास्त्रीयो वान्यथापि वा ।
ममाकर्तुरलेपस्य यथारब्धं प्रवर्तताम् ॥ ५४ ॥
अथवा कृतकृत्योऽपि लोकानुग्रहकाम्यया ।
शास्त्रीयेणैव मार्गेण वर्तेऽहं का मम क्षतिः ५५
देवार्चनस्नानशौचभिक्षादौ वर्ततां वपुः ।
तारं जपतु वाक् तद्वत्पठत्वाम्नायमस्तकम् ॥५६॥
विष्णुं ध्यायतु धीर्यद्वा ब्रह्मानन्दे विलीयताम् ।
साक्ष्यहं किंचिदप्यत्र न कुर्वे नापि कारये ॥५७॥
कृतकृत्यतया तृप्तः प्राप्तप्राप्यतया पुनः ।
तृप्यन्नेवं स्वमनसा मन्यतेऽसौ निरन्तरम् ॥५८॥
धन्योऽहं धन्योऽहं नित्यं स्वात्मानमञ्जसा वेद्मि ।
धन्योऽहं धन्योऽहं ब्रह्मानन्दो विभाति मे स्पष्टम्॥

धन्योऽहं धन्योऽहं दुःखं सांसारिकं न वीक्षेऽद्य।
धन्योऽहं धन्योऽहं स्वस्याज्ञानं पलायितं क्वापि ॥
धन्योऽहं धन्योऽहं कर्तव्यं मे न विद्यते किंचित्।
धन्योऽहं धन्योऽहं प्राप्तव्यं सर्वमद्य संपन्नम् ६१
धन्योऽहं धन्योऽहं तृप्तेर्मे कोपमा भवेल्लोके।
धन्योऽहं धन्योऽहं धन्यो धन्यः पुनः पुनर्धन्यः६२
अहो पुण्यमहो पुण्यं फलितं फलितं दृढम्।
अस्य पुण्यस्य संपत्तेरहो वयमहो वयम् ॥ ६३ ॥
अहो शास्त्रमहो शास्त्रमहो गुरुरहो गुरुः।
अहो ज्ञानमहो ज्ञानमहो सुखमहो सुखम् ॥६४॥

॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥
॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥
॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥ ६० ॥
॥ ६१ ॥ ६२ ॥ ६३ ॥ ६४ ॥

ब्रह्मानन्दाभिधे ग्रन्थे चतुर्थोऽध्याय ईरितः।
विद्यानन्दस्तदुत्पत्तिपर्यन्तोऽभ्यास इष्यताम् ६५

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीविद्यारण्यस्वामिविरचितायां पञ्चदश्यां ब्रह्मानन्दे विद्यानन्दो नाम चतुर्थोऽध्यायः समाप्तः ॥ ४ ॥

इममध्यायार्थमुपसंहरति—**ब्रह्मानन्दाभिध इति**॥६५॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीभारतीतीर्थविद्यारण्यमुनिकिंकरेण रामकृष्णाख्यविदुषा विरचिता ब्रह्मानन्दे विद्यानन्दव्याख्या समाप्ता ॥

---

# ब्रह्मानन्दे विषयानन्दप्रकरणम् ॥ १५ ॥



**अथात्र विषयानन्दो ब्रह्मानन्दांशरूपभाक् ।**
**निरूप्यते द्वारभूतस्तदंशत्वं श्रुतिर्जगौ ॥ १ ॥**

पञ्चमाध्यायस्य प्रतिपाद्यमर्थमाह—**अथेति** । ननु विषयानन्दस्य लौकिकत्वात् मोक्षशास्त्रे निरूपणमनुपपन्नमित्याशङ्क्य तस्य लौकिकप्रसिद्धत्वेऽपि ब्रह्मानन्दैकदेशत्वेन ब्रह्मज्ञानोपयोगित्वाद्युक्तमित्याह—**द्वारेति** । ब्रह्मानन्दैकदेशत्वे किं प्रमाणमित्याशङ्क्याह—**तदंशत्वमिति** ॥ १ ॥

**एषोऽस्य परमानन्दो योऽखण्डैकरसात्मकः ।**
**अन्यानि भूतान्येतस्य मात्रामेवोपभुञ्जते ॥ २ ॥**

तामेव श्रुतिमर्थतः पठति—**एष इति** ॥ २ ॥

**शान्ता घोरास्तथा मूढा मनसो वृत्तयस्त्रिधा ।**
**वैराग्यं क्षान्तिरौदार्यमित्याद्याः शान्तवृत्तयः ॥३॥**
**तृष्णा स्नेहो रागलोभावित्याद्या घोरवृत्तयः ।**
**संमोहो भयमित्याद्याः कथिता मूढवृत्तयः ॥ ४ ॥**

इदानीं विषयानन्दस्य ब्रह्मानन्दलेशत्वप्रदर्शनाय तदुपाधिभूतान्तःकरणवृत्तीर्विभजते—**शान्ता इति** । शान्ताः सात्विक्यो वृत्तयः घोराः राजस्यः मूढास्तामस्यः ता इव क्षान्त्यादिवृत्तीर्दर्शयति—**वैराग्यमित्यादिना** ॥ ३ ॥४॥

**वृत्तिष्वेतासु सर्वासु ब्रह्मणश्चित्स्वभावता ।**
**प्रतिबिम्बति शान्तासु सुखं च प्रतिबिम्बति॥५॥**

उदाहृतासु विविधास्वपि वृत्तिषु ब्रह्मणश्चिद्रूपत्वं भातीत्याह—**वृत्तिष्विति** । शान्तासु विशेषमाह—**शान्तास्विति** । चशब्दोऽनुक्तद्वयसमुच्चयार्थः ॥ ५ ॥

**रूपं रूपं बभूवासौ प्रतिरूप इति श्रुतिः ।**
**उपमा सूर्यकेत्यादि सूत्रयामास सूत्रकृत् ॥ ६ ॥**

उक्तार्थे श्रुतिवाक्यमर्थतः पठति—**रूपमिति** । तत्रैव व्याससूत्रैकदेशं पठति—**उपमेति** । अत एव चेति सूत्रस्य पूर्वभागः ॥ ६ ॥

**एक एव हि भूतात्मा भूते भूते व्यवस्थितः ।**
**एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ॥ ७ ॥**

स्वरूपेणैकस्योपाधिसंपर्कान्नानात्वे श्रुतिं पठति—**एक एवेति** ॥ ७ ॥

**जले प्रविष्टश्चन्द्रोऽयमस्पष्टः कलुषे जले ।**
**विस्पष्टो निर्मले तद्वद्द्वेधा ब्रह्मापि वृत्तिषु ॥ ८ ॥**

ननु निरवयवस्य ब्रह्मणः क्वचिच्चिन्मात्रभानमितरत्र चिदानन्दभानमित्येवं विभागकरणमनुपपन्नमित्याशङ्क्य चन्द्रदृष्टान्तेन परिहरति—**जले प्रविष्ट इति** । उक्तमर्थं दार्ष्टान्तिके योजयति—**तद्वदिति** ॥ ८ ॥

**घोरमूढासु मालिन्यात्सुखांशश्च तिरोहितः ।**
**ईषन्नैर्मल्यतस्तत्र चिदंशप्रतिबिम्बनम् ॥ ९ ॥**

तदेवोपपादयति—**घोरेति** ॥ ९ ॥

**यद्वापि निर्मले नीरे वह्नेरौष्ण्यस्य संक्रमः ।**
**न प्रकाशस्य तद्वत्स्याच्चिन्मात्रोद्भूतिरेव च ॥१०॥**

ननु चन्द्रोपाधेरुदकस्य द्वैविध्यादंशभानमुपपन्नं प्रकृते तूपाधिभूतस्यान्तःकरणस्यैकत्वादेकांशभानमुपपन्नमित्याशङ्क्य दृष्टान्तान्तरमाह—**यद्वापीति** ॥ १० ॥

**काष्ठे त्वौष्ण्यप्रकाशौ द्वावुद्भवं गच्छतो यथा ।**
**शान्तासु सुखचैतन्ये तथैवोद्भूतिमाप्नुतः ॥ ११ ॥**

इदानीं शान्तासु वृत्तिषु चिदानन्दयोः प्रतीतौ दृष्टान्तान्तरमाह—**काष्ठे त्विति** ॥ ११ ॥

**वस्तुस्वभावमाश्रित्य व्यवस्था तूभयोः समा ।**
**अनुभूत्यनुसारेण कल्प्यते हि नियामकम् ॥१२॥**

नन्वेवं व्यवस्था कुतः कृतेत्याशङ्क्याह—**वस्त्विति** । तत्र किं नियामकमित्याशङ्क्याह—**अनुभूतीति** ॥ १२ ॥

**न घोरासु न मूढासु सुखानुभव ईक्ष्यते ।**
**शान्तास्वपि क्वचित्कश्चित्सुखातिशय ईक्ष्यताम्॥**

अनुभूतिमेव दर्शयति—**न घोरास्विति** । शान्तास्व-

प्यानन्दप्रकाशोऽस्ति सोऽपि क्वचित्कश्चित्सुखातिशयो भवतीत्याह—**शान्तास्विति** ॥ १३ ॥

**गृहक्षेत्रादिविषये यदा कामो भवेत्तदा ।**
**राजसस्यास्य कामस्य घोरत्वात्तत्र नो सुखम् १४**

पूर्वोक्तघोरमूढवृत्तिषु सुखाभावमेवाभिनीय दर्शयति—**गृहक्षेत्रेति** ॥ १४ ॥

**सिध्येन्न वेत्यस्ति दुःखमसिद्धौ तद्विवर्धते ।**
**प्रतिबन्धे भवेत्क्रोधो द्वेषो वा प्रतिकूलतः ॥१५॥**

सुखासिद्धौ वर्धति दुःखं । सुखस्य प्रतिबन्धे तु क्रोधो भवति । सुखाभावे कारणान्तरमाह—**द्वेषो वेति** । तत्र प्रतिकूलदुःखस्य सत्त्वादित्यर्थः ॥ १५ ॥

**अशक्यश्चेत्प्रतीकारो विषादः स्यात्स तामसः ।**
**क्रोधादिषु महद्दुःखं सुखशङ्कापि दूरतः ॥ १६ ॥**
**काम्यलाभे हर्षवृत्तिः शान्ता तत्र महत्सुखम् ।**
**भोगे महत्तरं लाभप्रसक्तावीषदेव हि ॥ १७ ॥**
**महत्तमं विरक्तौ तु विद्यानन्दे तदीरितम् ।**
**एवं क्षान्तौ तथौदार्ये क्रोधलोभनिवारणात्॥१८॥**

परिहारस्याशक्यत्वे विषादो भवति तस्यापि तामसत्वान्न तत्र सुखमित्याह—**अशक्य इति** । क्रोधादिष्विलादयः स्पष्टार्थाः ॥ १६ ॥ १७ ॥ १८ ॥

**यद्यत्सुखं भवेत्तत्तद्ब्रह्मैव प्रतिबिम्बनात्।**
**वृत्तिष्वन्तर्मुखास्वस्य निर्विघ्नं प्रतिबिम्बनम् १९**

एवं क्षान्त्यादीनां सिद्धमित्याह—**वृत्तिष्विति** ॥१९॥

**सत्ता चितिः सुखं चेति स्वभावा ब्रह्मणस्त्रयः।**
**मृच्छिलादिषु सत्तैव व्यज्यते नेतरद्वयम् ॥ २० ॥**

इदानीं सर्वत्र ब्रह्मस्वरूपानुभूतिप्रदर्शनाय तत्स्वरूपं स्मारयति—**सत्तेति**। मृच्छिलादिषु सन्मात्रमित्यर्थः २०

**सत्ता चितिर्द्वयं व्यक्तं धीवृत्त्योर्घोरमूढयोः।**
**शान्तवृत्तौ त्रयं व्यक्तं मिश्रं ब्रह्मेत्थमीरितम् २१**

घोरमूढयोर्द्वयोः सत्ताचिती द्वे शान्तवृत्तौ सच्चिदानन्दाः त्रयोऽपि व्यक्ताः। एवं सप्रपञ्चं ब्रह्माभिहितमित्याह—**मिश्रमिति** ॥ २१ ॥

**अमिश्रं ज्ञानयोगाभ्यां तौ च पूर्वमुदीरितौ।**
**आद्येऽध्याये योगचिन्ता ज्ञानमध्याययोर्द्वयोः २२**

अमिश्रं कुतो ज्ञायत इत्याशङ्क्याह—**अमिश्रमिति**। तौ च ज्ञानयोगौ पूर्वमेवोक्तावित्यर्थः। कुत्रोक्तावित्याशङ्क्य योगः प्रथमाध्याये उक्त इत्याह—**आद्य इति**। समनन्तराध्याययोर्ज्ञानमुक्तमित्याह—**ज्ञानमिति** ॥ २२ ॥

**असत्ताजाड्यदुःखे द्वे मायारूपं त्रयं त्विदम्।**
**असत्ता नरशृङ्गादौ जाड्यं काष्ठशिलादिषु ॥२३॥**

ननु सच्चिदानन्दानां ब्रह्मरूपत्वे मायायाः किं रूपमित्याशङ्क्याह—**असत्तेति**। नृशृङ्गादावसत्त्वं मृच्छिलादिषु जाड्यमिति विवेकः ॥ २३ ॥

**घोरमूढधियोर्दुःखमेवं माया विजृम्भिता।**
**शान्तादिबुद्धिवृत्त्यैक्यान्मिश्रं ब्रह्मेति कीर्तितम्॥**

दुःखं कुत्रेत्याशङ्क्याह—**घोरमूढेति**। एवं सर्वत्र माया प्रतिभासत इत्याह—**एवमिति**। शान्तादिषु वृत्तिषु ब्रह्मणो मिश्रत्वे किं कारणमित्यत आह—**शान्तादीति** ॥ २४ ॥

**एवं स्थितेऽत्र यो ब्रह्म ध्यातुमिच्छेत्पुमानसौ।**
**नृश्टङ्गादिमुपेक्षेत शिष्टं ध्यायेद्यथायथम् ॥ २५ ॥**

एतदभिधानं किमर्थमित्याशङ्क्य ब्रह्मध्यानार्थमित्याह—**एवमिति**। नृशृङ्गादिमुपेक्ष्यान्यत्र ब्रह्मध्यानं कर्तव्यमित्याह—**नृश्टङ्गादिमिति** ॥ २५ ॥

**शिलादौ नामरूपे द्वे त्यक्त्वा सन्मात्रचिन्तनम्।**
**त्यक्त्वा दुःखं घोरमूढधियोः सच्चिद्विचिन्तनम्॥**

अन्यत्रेत्युक्तं कुत्र कथं ध्येयमित्यत आह—**शिलादाविति**। घोरमूढबुद्धिषु दुःखं परित्यज्य सच्चिद्रूपयोश्चिन्तनं कर्तव्यमित्याह—**त्यक्त्वेति** ॥ २६ ॥

**शान्तासु सच्चिदानन्दांस्त्रीनप्येवं विचिन्तयेत् ।**
**कनिष्ठमध्यमोत्कृष्टास्तिस्रश्चिन्ताः क्रमादिमाः॥२७**

सात्विकवृत्तिषु सच्चिदानन्दास्त्रयोऽपि ध्येया इत्याह—**शान्तास्विति** । एषां ध्यानानां किं साम्यं, नेत्याह—**कनिष्ठेति** ॥ २७ ॥

**मन्दस्य व्यवहारेऽपि मिश्रब्रह्मणि चिन्तनम् ।**
**उत्कृष्टं वक्तुमेवात्र विषयानन्द ईरितः ॥ २८ ॥**

इदानीं निर्गुणब्रह्मध्यानेऽनधिकारिणोऽनुग्रहाय मिश्र-ब्रह्मध्यानेऽधिकार इत्यभिप्रायेणाह—**मन्दस्येति** ॥ २८ ॥

**औदासीन्ये तु धीवृत्तेः शैथिल्यादुत्तमोत्तमम् ।**
**चिन्तनं वासनानन्दे ध्यानमुक्तं चतुर्विधम् ॥२९॥**

एवं सवृत्तिकं ध्यानत्रयमुक्त्वाऽवृत्तिकं ध्यानमाह—**औदासीन्ये त्विति** । एभ्यो ध्यानेभ्योऽधिकमित्यर्थः । उक्तं निगमयति—**ध्यानमिति** ॥ २९ ॥

**न ध्यानं ज्ञानयोगाभ्यां ब्रह्मविद्यैव सा खलु ।**
**ध्यानेनैकाग्र्यमापन्ने चित्ते विद्या स्थिरीभवेत् ३०**

अयं ध्यानावान्तरभेदः किं नेत्याह—**न ध्यान-मिति** । तर्हि किमेतदित्याशङ्क्याह—**ब्रह्मविद्येति** । इयं ब्रह्मविद्या कथमुत्पन्नेत्याशङ्क्याह—**ध्यानेनेति** ॥ ३० ॥

**विद्यायां सच्चिदानन्दा अखण्डैकरसात्मताम् ।**
**प्राप्य भान्ति न भेदेन भेदकोपाधिवर्जनात् ३१**

अस्या विद्यात्वे हेतुमाह—**विद्यायामिति** ॥ ३१ ॥

**शान्ता घोराः शिलाद्याश्च भेदकोपाधयो मताः ।**
**योगाद्विवेकतो वैषामुपाधीनामपाकृतिः ॥ ३२ ॥**

भेदकोपाधिवर्जनादित्युक्तं तानेव भेदकोपाधीनाह—**शान्ता इति** । एतेषां परिहारः केनोपायेनेत्याशङ्क्याह—**योगादिति** ॥ ३२ ॥

**निरुपाधिब्रह्मतत्त्वे भासमाने स्वयंप्रभे ।**
**अद्वैते त्रिपुटी नास्ति भूमानन्दोऽत उच्यते ३३**

फलितमाह—**निरुपाधीति** । त्रिपुटीभानाभावात् । भूमानन्द इत्युच्यत इत्यर्थः ॥ ३३ ॥

**ब्रह्मानन्दाभिधे ग्रन्थे पञ्चमोऽध्याय ईरितः ।**
**विषयानन्द एतेन द्वारेणान्तः प्रविश्यताम् ॥३४॥**

ग्रन्थमुपसंहरति—**ब्रह्मानन्देति** । स्पष्टत्वान्न व्याख्यायते ॥ ३४ ॥

**प्रीयाद्धरिर्हरोऽनेन ब्रह्मानन्देन सर्वदा ।**
**पायाच्च प्राणिनः सर्वान्स्वाश्रिताञ्छुद्धमानसान् ॥**